[illegible]सूरीश्वर-सद्गुरुभ्यो नमः ।

तपागच्छाधिपति-शासनसम्राट्-भट्टारकाचार्य-महाराजश्रीमद्विजय-

नेमिसूरीश्वरमहाराज-पट्टालङ्कार-कवित्व-शास्त्रविशारदाचार्य-

श्रीविजयामृतसूरीश्वरमहाराज-विनेयरत्न-विनयनिधान-

मुनिवर्य-श्रीपुण्यविजयजिन्महाराज-चरणकमलमधुकर-

## मुनिधुरन्धरविजय-गुम्फिता

# साहित्य-शिक्षा-मञ्जरी

डॉ० कन्हार शोर गो

प्रध्यक्ष. संस्कृत-वि

(सटीक-श्रीसिद्धसारस्वतस्तव-शब्दव्युत्पत्तिमीमांसासमन्विता)

वीर-निर्वाण सं. २४७१
विक्रमसंवत् २००१
-मूल्यम्-
रु. [illegible]-०-०

- प्रकाशिका -
श्री-जैन-साहित्यवर्धक सभा
गोपीपुरा,
सुरत—(गुजरात).

जामनगर—श्रीजैनभास्करोदयमुद्रणालये मुद्रितम्

# प्रकाशकीय-निवेदन

सज्जनोना करकमलमां अमे आ त्रीजुं ग्रन्थरत्न मुकतां आनन्द अनुभवीए छीए. आ ग्रन्थनी संकलना विद्वान् मुनिमहाराज श्रीधुरन्धरविजयजी महाराजे करी छे. तेओश्री तेमना सर्वतोमुख पाण्डित्यनो लाभ जनताने आ संस्था द्वारा आपे छे, ए आ संस्थानु सद्भाग्य छे. धीरे धीरे न्याय व्याकरण-ज्योतिष् वगेरे विषयना तेओश्रीए बनावेला विशिष्ट ग्रन्थो अमे आपनी समक्ष मुकवा भाग्यशाली थइए एम इच्छीए छीए.

आ ग्रन्थनी उपयोगिता अने तेमां आवता विषयोनी समज प्रस्तावनामां सुन्दर रीते बतावी छे वाचको प्रस्तावना वाचवापूर्वक ग्रन्थनु अवगाहन करशे तो तेमने विशेष मजा पडशे मुद्रणदोषे थयेलो अशुद्धिओ, शुद्धिपत्रकमां प्रमाणे सुधारी वांचवा भलामण छे

रसीयाओ रसनो आस्वाद लेवा माटे आ ग्रन्थने पण रसपूर्वक वांचे, विचारे ने आखर अनन्त रससागरमा लीन थइ जाय एज.

अभिलाषा साथे विरमिए छीए अमे आपना

**केशरीचन्द्र हीराचन्द झवेरी, नेमचन्द मोतिचन्द झवेरी**

ओ. सेक्रेटरी

**श्री जैनसाहित्यवर्धक सभा-सुरत.**

---

— સંરક્ષક —

૧૦૧) શાહ જેઠાભાઈ કેશવચંદ—જામનગર.

— સહાયક —

૫૧) ઝવેરી પ્રેમચંદ કપુરચંદ ૫૦) શાહ છગનલાલ પાનાચંદ

હા. તેમના ધર્મપત્ની બાઈ પાર્વતી ૫૦) ઝવેરી કાનજી તારાચંદ

૫૦) વોરા પોપટલાલ પાનાચંદ હા તેમના ધર્મપત્ની બાઈ હેમીબાઈ

હા તેમના ધર્મપત્ની બાઈ લક્ષ્મીબાઈ ૫૦) શાહ સાકરચંદ દેવચંદ

૨૫) ઝવેરી કપુરચંદ અજરામલ—સભ્ય

[illegible]

# स्तुति-पञ्चकम्

(शिखरिणी-छन्दोबद्धम्)

जनानां सौभाग्या—ज्जनिरजनि यस्यात्र सुभगा,
सुराष्ट्रे सौराष्ट्रे सुचिररुचिरबोटादनगरे ॥
कुलीनेऽर्हल्लीने सुकृतिकृतिपीने परिजने,
स्तुवे तं सद्भक्त्या परममृतसूरिं गुरुवरम् ॥ १ ॥

विरक्तिः संसाराच्छिशुसमयतो भक्तिरतुला,
जिने दीनेऽकम्पा सततमनुकम्पा शुभफला ॥
सदा ज्ञाने ध्याने रुचिरविचला यस्य विमला, स्तुवे—॥ २ ॥

विशुद्धा दीक्षायाः समजनि मुमुक्षाप्रबलतः,
स्वभावात् सद्भावा—चरणकरणं साधु चरितम् ॥
गुरुप्रेम्णा प्राप्तं पदमनुपदं येन विदितं, स्तुवे—॥ ३ ॥

यदीयं व्याख्यानं व्रतचरणसम्मानजननं,
यदीयं सौभाग्यं सुजनजनदौर्भाग्यहननम् ॥
यदीयं माहात्म्यं प्रशमरसतादात्म्यकरणं, स्तुवे—॥ ४

उपाध्याधिव्याधि—प्रभवभवदुःखानि सपदि,
क्षयं शीघ्रं यान्ति क्रमकमलयोर्यस्य नमनात् ॥
सुखानामास्थानं भवति झटिति प्राणिनिवहः, स्तुवे—॥ ५ ॥

(भुजङ्गप्रयातम्)

इदं पञ्चकं पञ्चमज्ञानदायि, प्रगे पाठमात्रेण संसारतायि ॥
सुरम्यां प्रभावाद् गुरोर्भक्तिभावात्, इदं श्रेयसे सज्जनानां मुदे स्यात् ॥

शासनसम्राट्-सर्वतन्त्रस्वतन्त्र-सूरिचक्रचक्रवर्ति-पूज्याचार्य-
महाराजश्रीविजयनेमिसूरीश्वरमहाराजानां
परदर्शनात्मविचारखण्डनपुरस्सरस्वदर्शनात्मविचारमण्डनात्मकः

## स्वाध्यायः । (गीयते प्राभातिक-रागेण)

जयति जिनशासने सूरिसम्राड् गुरु-**नेमिसूरिः** सकलतत्त्वसिन्धुः ॥
श्रुतनिधिः सेवधि. सद्गुणानामय, करुणरसजलधिसमसत्त्वबन्धुः ॥ १ ॥

आत्मनोऽभावसिद्ध्यै मुधा **नास्तिकै**-र्यत्यते सर्वयत्नेन नित्यम् ॥
युक्तियुक्तं यतस्तत्र प्रतिबन्धक, भवति यद्वचनरचन नु सत्यम् ॥ २ ॥

चित्स्वरूपं क्षणस्थायिनं **सौगतः**, सर्वदा चेतनं वक्त्यगौणम् ॥
किन्तु यद्वचनहृतशेषशक्ति सदो-मध्यमध्यासितो भजति मौनम् ॥ ३ ॥

यत्प्रभाभूतिभिर्भीतभीतैश्चिद्-**द्वैतवादै**ररण्यं प्रयातम् ॥
मायया संयुतं ब्रह्म तत्रापि तैः, स्वीकृतं 'घट्टकुट्यां प्रभातम्' ॥ ४ ॥

देहिनो व्यापकत्वं विदेहात्मनो, रहिततां संविदादेर्वदन्ति ॥
**कणभुजो गौतमा** यत्समीपे परं, गोतमीभूय मूका भवन्ति ॥ ५ ॥

ज्ञपयितुं चेतनं सकलकरणैरक-र्तारमिह **कापिलाः** संयतन्ते ॥
येन संशिक्षिता कर्तुमालोचनां, मूर्ध्नि नित्यं त्रिदण्डं वहन्ते ॥ ६ ॥

शाश्वतं नश्वर जन्यमपि सम्भवे-दात्मतत्त्व **ह्यनेकान्तवादे** ॥
नान्यथा बन्धमोक्षव्यवस्था भवेत्, स्थापितं येन विद्वद्विवादे ॥ ७ ॥

**दर्शनोदयकरो नन्दनो** धीमतां, सर्वथा बाल्यतो ब्रह्मचारी ॥
विश्व**विज्ञान**वित् **पद्म**पादः प्रमो-दामृतापूर्ण-**लावण्य**धारी ॥ ८ ॥

( उपजातिः )

इत्थं मया **श्रीविजयादिनेमिः**, **सूरिः** स्तुतस्तर्कविचारगर्भम् ॥
श्रीतीर्थरक्षोद्धरणादिकार्ये, **धुरन्धरः** स्तात्सुखदायको मे ॥ ९ ॥

---

इत्यात्मतत्त्वविचारमण्डनात्मक. श्रीविजयनेमिसूरीश्वरस्वाध्यायः ॥



શાસનસમ્રાટ્-શ્રીમહાચાર્યવર્ય-વિજયનેમિસૂરીશ્વરજી મહારાજ

॥ श्री गौतमस्वामिने नमः ॥

# प्रारम्भिक-प्रकथन

साहित्य—खारा महेरामणमां मीठो वहेतो विरडो
साहित्य—धखता धोममा कल्पवेलीनी शीळी छाय
साहित्य—विष वरसता विश्वमा—अमृतबिन्दु.

एने कोण न चाहे! एने कोण न इच्छे! एने माणवाना कोड—अभिलाष कोने न जागे! माणस-माणस होय, एनुं मनुष्यत्व मरी गयुं न होय, तो एने साहित्य सिवाय चालेज नहिं ए वायु वगर नभावी ले, जल विना जीवे, एने खाधा सिवाय चाले, पण साहित्य न मळे, रसना घूंटडा पीवा न सांपडे तो एने जीववुं न गमे, एना विना एना प्राण न टके.

साहित्यथी सर्वनुं श्रेय: सवाय छे जगतना कल्याणनो मोटो फाळो तेने भागे छे एवो कोण छे? के जेणे साहित्यनु साचु सेवन कर्युं होय—हृदयथी साहित्यनी उपासना करो होय ने तेनु हित न थयु होय? तेने लाभ मळयो न होय? हा, बने, साहित्यने नामे दुनीयामां फेलाता दौर्हित्य—[illegible]—कचरा पट्टीमां फसाइ गयो होय तेने लाभ न थाय, लाभ तो न थाय पण तेनु अकल्याणज थाय, विषयवेलीनी छांयमां शान्ति क्यांथी मळे? शूळ सिवाय बावळ पासे बीजी शु सपत्ति होय!

माटे साहित्यना कोड पूरनारे प्रथमथी साहित्य अने साहित्याभासनी ओळख-परीक्षा करतां शीखवु जोइए बे वच्चेनो तफावत जाणतां शिखवु जोइए. खराखोटानी तपास करतां शिखवुं जोइए ए शिखडावनार ग्रन्थ ते साहित्यशास्त्र, काव्यप्रकाश, काव्यानुशासन,सरस्वतीकठाभरण, साहित्यदर्पण,अलंकारचिन्तामणि दशरूपक, रसगंगाधर वगेरे महासागर जेवा ते ग्रन्थो ते महासागरोना घूघवाटथी

सारस्वतस्तव' छे. सांभळवा प्रमाणे प्रथम आना १४ सूक्तो हता, एनो प्रभाव एवो हतो के ते पाठ करवानी साथे देवी सरस्वती साक्षात हाजर थती. देवीना कथनथीज एक पद्य कमी करी नाखवामां आवेल छे, तो पण आ स्तोत्रमांथी नीकळता मन्त्रनो दशांश सहित विधियुक्त आम्नाय प्रमाणे लक्ष जाप करवामां आवे, तो तेने भगवती भारतीना दर्शन थाय ए निःसंशय छे. प्रभात समये स्तोत्रनो रोज पाठ करवामां आवे, तो ज्ञानावरणीय कर्मनो क्षयोपशम वधे बुद्धिशक्ति खीलवा साथे ज्ञान पण सारुं चडे.

बीजा परिशिष्टमां—'शब्दवृत्तिमीमांसा' छे. शब्दथी जे ज्ञान ज्ञान करावनारा अनेक कारणोमां आ वृत्तिओ पण छे. ते प्रधानतया शक्ति लक्षणा ने व्यञ्जना. आ मीमांसामां शक्ति अने लक्षणाने ... विस्तारथी व्यञ्जनाने निरूपी छे. केटलाएक व्यञ्जनानी जरुर नथी ; युक्तिपूर्वक व्यञ्जना मानवा समजाव्या छे, ने व्यञ्जना मान्या वगर ए साबीत कर्युं छे. साहित्यमां व्यञ्जनानो प्रभाव डगले ने पगले ए रीते त्यां ... पुस्तकनी पूर्णाहुति थाय छे.

आ ग्रन्थथी सहृदयो सत्य साहित्य समजता शीखे, ने क्लिष्ट साहित्यथी दूर रहे ए आ ग्रन्थनुं प्रधान प्रयोजन छे.

आना पठन, पाठन, वाचन, मननथी एक पण आत्मा ... बनशे तो आने अङ्गे करेल महेनत सफल छे. एज आत्म मात्र ...

संवत् २००० विजयादशमी. | मुनिधुरन्धरविजय देवबाग, लक्ष्मीजैनाश्रम—

सारस्वतस्तव' छे. सांभळवा प्रमाणे प्रथम आना १४ सूक्तो हता, एनो प्रभाव एवो हतो के ते पाठ करवानी साथे देवी सरस्वती साक्षात हाजर थती. देवीना कथनथीज एक पद्य कमी करी नाखवामां आवेल छे, तो पण आ स्तोत्रमांथी नीकळता मन्त्रनो दशांश सहित विधियुक्त आम्नाय प्रमाणे लक्ष जाप करवामां आवे, तो तेने भगवती भारतीना दर्शन थाय ए निःसंशय छे. प्रभात समये स्तोत्रनो रोज पाठ करवामां आवे, तो ज्ञानावरणीय कर्मनो क्षयोपशम वधे ने बुद्धिशक्ति खीलवा साथे ज्ञान पण सारुं चडे.

बीजा परिशिष्टमां—'शब्दवृत्तिमीमांसा छे. शब्दथी जे ज्ञान थाय छे ते ज्ञान करावनारा अनेक कारणोमां आ वृत्तिओ पण छे. ते प्रधानतया त्रण छे शक्ति लक्षणा ने व्यञ्जना. आ मीमांसामां शक्ति अने लक्षणाने टूंकमां बतावी विस्तारथी व्यञ्जनाने निरूपी छे. केटलाएक व्यञ्जनानी जरुर नथी मानता तेमने युक्तिपूर्वक व्यञ्जना मानवा समजाव्या छे, ने व्यञ्जना मान्या वगर चाले नहिं ए साबीत कर्युं छे. साहित्यमां व्यङ्जनानो प्रभाव डगले ने पगले अनुभवाय छे. ए रीते त्यां आ 'पुस्तकनी पूर्णाहुति थाय छे.

आ ग्रन्थथी सहृदयो सत्य साहित्य समजता शीखे, ने दुष्ट अनिष्ट अने क्लिष्ट साहित्यथी दूर रहे ए आ ग्रन्थनुं प्रधान प्रयोजन छे.

आना पठन, पाठन, वाचन, मननथी एक पण आत्मा सत्साहित्यनो उपासक बनशे तो आने अङ्गे करेल महेनत सफल छे. एज आत्म मात्र कल्याण पन्थे संचरो.

संवत् २०००
विजयादशमी.

मुनिधुरन्धरविजय
देवबाग, लक्ष्मीजैनाश्रम—जामनगर.

॥ ॐ अर्हं नमः ॥

# साहित्यशिक्षामञ्जरी



उपजातिः

रस[1]प्रवाहोज्ज्वलभावसद्गुणा-
नवद्यरीत्युज्झितदोषनिर्मलाम् ।
सालङ्कृतामर्थविशेषशालिनीं,
स्मरामि नित्यं जिनवाचमादरात् ॥ १ ॥

निर्बाधसद्बोधरसप्रसेक-समर्पिताशेषजनप्रमोदम् ।
अनारतं चित्त्वपलासमेतं नवीननेमिस्तनयित्नुमीडे ॥ २ ॥

स्मृतोऽपि दूरीकुरुते कुबोध-तमस्ततिं यो निरवद्यवाचः ।
आचार्यवर्योऽमृतसूरिसूरः पुण्याश्रितो मे कुशलं तनोतु ॥३॥

अनुष्टुप्

व्याख्यां कुमुदचन्द्राख्ये नाटके व्यरचद्यकः ॥
मयूरदूतसंहब्धा धीमद्धुरन्धरो मुनिः ॥ ४ ॥

मालिनी

सरस ऋजुमतीनामाशुसद्बोधकृत्यै ।
नवनवपरिबोधस्फार संभारशुभ्राम् ॥
अनति विपुलरूपां काव्यमार्गे नवीनां ।
रचयति शिशुशिक्षामञ्जरीं साधुवर्यः ॥ ५ ॥ युग्मम् ॥

---

१ रसभावगुणादिशब्दैर्वाच्यार्थः सूचित. । २ मेघम् । ३ सूर्यः ।

इह हि निरतिशयानन्दौपयिकमनेकानेकसांसारिकचिन्ताचान्तचित्तानामपि, अन्यानपेक्षमनोविनोदसम्पादकं "काव्य" मेव; तदुक्तं काव्यप्रकाशकृता—

आर्या

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ॥
सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेशयुजे ॥ १ ॥

कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिभिरपि काव्यानुशासने उक्तं यत् ॥

काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च ॥ १ ॥ २ ॥ इति ।

अत्रेदं सुभाषितमपि—

संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
सुभाषितरसास्वादः संगमः सज्जनैः सह ॥ १ ॥

एतादृक्काव्यरचनोपयिकसामग्रीकृते काव्यरहस्य विज्ञानाय च केषां सहृदयानामत्युत्कण्ठं नोत्कण्ठते चेतः ।

अतस्तदुपयोगिकी सामग्री साहित्याकरग्रन्थेभ्यः, समुद्धृत्य संक्षेपान्निरुप्यते—तत्र जिज्ञासूनां पञ्चजिज्ञासाः प्रयोजिकाः ताश्चेमाः ।

कथं कवित्वसंप्राप्तिः कवेः शिक्षा च कीदृशी ।
कश्च काव्ये चमत्कारो गुणदोषादयश्च के ॥ १ ॥
सम्प्रदायः कवेः कोऽस्ति लोकोत्तरविनोदद: ।
तेषां ज्ञानाय संक्षेपात्स्वरूपमिह दर्श्यते ॥ २ ॥

तत्र पञ्च प्रमितयः क्रमेणोच्यन्ते—

१ आक्रान्त ।

## अथ प्रथमा प्रमितिः ॥ १ ॥

तत्र प्रथमायां प्रमितौ कवित्वसंप्राप्तिः । सा त्रिधा । १ दिव्यप्रयत्नोपलभ्या, २ जन्मान्तरसंस्कारजन्या, ३ लौकिकप्रयत्नसाध्या चेति ।

तत्र दिव्यप्रयत्नोपलभ्या कवित्वसंप्राप्तिः, देवताराधनजन्या । तत्र मंत्रः "ऐं" प्रभृतिः । "ऐं" काराभिधमन्त्रजापेन कवित्वावाप्तिः श्रीयशोविजयोपाध्यायानाम्—
तथा च तेषामेवोक्तम्—

"ऐं" कारजापवरमाप्य कवित्ववित्व—वाञ्छासुरद्रुमुपगंगमभङ्गरंगम् ॥
सूक्तैर्विकासिकुसुमैस्तववीरशम्भो—रम्भोजयोश्चरणयोर्वितनोमि पूजाम् ॥ १ ॥

इति महावीरस्तवापरनामखण्डनखण्डखाद्ये ।

श्रीहेमचन्द्रसूरीणामपि वाग्देवताप्रसाद आसीत्, तदुक्तं यथा "एकदा किल सोमचन्द्रमुनिः" (श्रीहेमचन्द्रसूरिः) संजात वाग्देवताराधनाभिलाषो गुर्वाज्ञया काश्मीरान् प्रति प्रस्थितः, सरस्वतीमन्त्रं स्मरतस्तस्य मार्गे एव मिलिता भारती, एवमुक्तवती ।

काश्मीरान्मास्म यासीस्त्वं वत्स ! मत्तोषहेतवे ।
त्वद्भक्तिप्रणिधानाभ्यां प्रीतास्म्यत्रापि संप्रति ॥ १ ॥
सिद्धसारस्वतो भूयाः प्रसादेन ममाधुना ।
इत्युदीर्य तिरोऽधत्त देवी विद्युदिव क्षणात् ॥ २ ॥

तथा बप्पभट्टिसूरीणामपि मन्त्राराधनजन्यसरस्वतीप्रसादवर्णनं यथा प्रभावकचरित्रे—

योग्यतातिशयं चास्य ज्ञात्वा सद्गुरवस्ततः ।
सारस्वतं महामन्त्रं तत्रस्थास्तस्य ते ददुः ॥ ३२ ॥
परावर्त्तयतस्तस्य निशीथे तं सरस्वती ।
स्वर्गङ्गास्रोतसि स्नांत्यनावृत्तासीद्रहो भुवि ॥ ३३ ॥
तन्मंत्रजापमाहात्म्यात्तद्रूपा सा समाययौ ।
ईषद् दृष्ट्वा च तां वक्त्रं परावर्तयति स्म सः ॥ ३४ ॥
स्वं रूपं विस्मरन्तीव प्राह वत्स? कथं मुखम् ।
विवर्तसे भवन्मन्त्र—जापात्तुष्टाहमागता ॥ ३५ ॥
वरं वृण्विति तत्प्रोक्तो बप्पभट्टिरुवाच च ।
मातर्विसदृशं रूपं कथं वीक्ष्ये तवेदृशम् ॥ ३६ ॥
स्वां तनु पश्य निर्वस्त्रामित्युक्ते स्वं ददर्श सा ।
अहो निबिडमेतस्य ब्रह्मव्रतमिति स्फुटम् ॥ ३७ ॥
उच्चैश्च मंत्रमाहात्म्यं येनाहं गतचेतना ।
धायन्ती दृढतोषेण त्वत्पुरः समुपस्थिता ॥ ३८ ॥
वरेऽपि निस्पृहे त्वत्र दृढं चित्रातिरेकतः ।
गत्यागत्यो ममास्त्वेच्छा त्वदीया निर्वृतो भव ॥ ३९ ॥

तथा च तै रचितं अनुभूतसिद्धसारस्वतस्तवाभिधं सरस्वतीस्तोत्रं भारतीप्रसादप्रयोजकं महाप्रभावकं त्रयोदशश्लोकात्मकं वर्तते ॥

एवं श्रीवृद्धवादीनामपि वाग्देवताप्रसादः प्रसिद्धः, स चैवम् वृद्धे वयसि गृहीतदीक्षो मुकुन्दाभिधानो मुनिः (श्रीवृद्धवादी) श्रुत-

तच्च परिशिष्टेऽवलोक्यम् ।

पाठमहाघोषैरम्बरं प्रतिशब्दयन् केनचिद् युवमुनिना सोपहासं उक्तः "किमेवं त्वं मुशलं प्रफुल्लयिष्यसि" इति श्रुत्वा स दध्यौ अज्ञानिनो मे जन्म धिक् तदहं भारतीदेवतामाराधयिष्यामि इति निश्चित्य, एकविंशतिदिनपर्यन्तमुपवासेनाराधिता वाग्देवी;

प्रसन्ना सा उवाच—

समुत्तिष्ठ प्रसन्नास्मि पूर्यन्तां ते मनोरथाः ।
स्खलना न तवेच्छास्तु तद्विधेहि निजेहितम् ॥ १ ॥

ततः समुत्थाय कृतपारणकः कस्यचिद् गृहिणो गृहात् मुशलं समानाय्य एवमवोचत् ॥

अस्मादृशा अपि यदा भारति ! त्वत्प्रसादतः ।
भवेयुर्वादिनः प्राज्ञा मुशलं पुष्प्यतां ततः ॥ १ ॥
इत्युक्त्वा प्रासुकैर्नीरैः सिषेच मुशलं मुनिः ।
सद्यः पल्लवितं पुष्पै-र्युक्तं तारैर्यथा नभः ॥ २ ॥ इत्यादि ।

कविकालिदासस्यापि कालिकादेवीप्रसादसमुपलब्धः कवित्वशक्त्युद्भवः प्रसिद्धतरः । मन्त्राम्नायादिकं गुरूपासनतः प्राप्यम् ।

२ द्वितीया जन्मान्तरसंस्कारजन्या कवित्वसंप्राप्तिः ।

सा च गतजन्मनि आराधितज्ञानानां ज्ञानावरणादिकर्मणां क्षयोपशमाभ्यां संजायते । यथा श्री आर्यरक्षितसूरीणां लघुनयसि वेदोपनिषत्पारिणा देशोनदशपूर्वपर्यन्तश्रुताध्ययनसमर्था धीः जन्मान्तरसंस्कारजन्यैव । तथा वैशेषिकसूत्रोपस्कारादिग्रन्थविधात्रा शंकरमिश्रेण बाल्ये वयसि राजसभायां ॥

" सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् "

इति वेदसूक्तसमस्या स्वप्रतिभावैभवेन पूरिता यथा–

चलितश्चकितच्छन्नः प्रयाणे तव भूपते ? ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ १ ॥ इति ।

सन्तुष्टेन राज्ञा भूरिदानं दत्त्वा कथितं, "अहो बाल्येऽप्यस्यप्रतिभा" तदा उनपञ्चवर्षवयस्केन शङ्करमिश्रेणोक्तम्—

बालोऽहं जगदानन्द ! न मे बाला सरस्वती ।
अपूर्णे पञ्चमे वर्षे वर्णयामि जगत्त्रयम् ॥ १ ॥

इति यच्छ्रूयते तत्र प्रागृजन्मसंस्कार एव हेतुरवसीयते । इति ।

३ तृतीया लौकिकप्रयत्नलभ्या कवित्वशक्तिः ।

सा च व्याकरणकाव्यकोशछन्दःशास्त्राद्यभ्याससाध्या, तत्राधिकारी त्रिविधः, अल्पप्रयत्नबोध्यः, कृच्छ्रबोध्यः, कृच्छ्रतरबोध्यश्च। तेषु यस्य प्रतिभा उत्तमा काव्यरुचिश्च बलीयसी गुरुविनयश्च गरीयान् स प्रथमः। स हि अल्पायासेन पदपादपूर्त्यादिना काव्यानि विदधाति, तत्र पदपूर्त्तिः यथा " श्रियः कुरूणामधिपस्य पालिनीमितिपद्यस्य " आद्यपदमादाय माघेन पूर्त्तिः कृता, " श्रियः पतिः श्रीमतिशासितु " मित्यादि ।

पादपूर्तिः यथा महामहोपाध्यायश्रीमेघविजयगणीनां मेघदूतसमस्यालेखे ।

स्वस्ति श्रीमद्भुवनदिनकृद्वीरतीर्थाभिनेतुः ।
प्राप्यादेशं तपगणपतेर्मेघनामा ' विनेयः ॥

ज्येष्ठस्थित्यां पुरमनुसरन्नव्यरङ्गं ससर्ज ।
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

यथा वा ।

भक्तमारप्रणतमौलिमणिप्रभाणा–मुद्दीपकं जिन[१] पदाम्बुजयामलन्ते ॥
स्तोष्ये मुदाहमनिशं किल मारुदेव[१] । दुष्टाष्टकर्मरिपुमण्डलभित्सुधीर[१] ॥ २ ॥

**स्वातन्त्र्येण यथामम स्तुति चतुर्विंशतिकायां—**

शिशुमये समये प्रणतो नतोऽ—मरपति· प्रभुवंशविवृद्धये ॥
करकजेऽर्पयदैक्षववंशकम् वितरतादृषभ· समदीप्सितम् ॥ २ ॥

**कृच्छ्रबोध्यः द्वितीयः । स हि कालीदासादिकृतप्रबन्धानाम-वलोककः तदवलोकनजातचित्ताह्लादः काव्यकवनपटूनां सहवासी काव्यरचनायै वाक्यार्थशून्यमपि काव्ययोजनं करोति, छायादिकमा-दायकाव्यकर्ता च । तत्र वाक्यार्थशून्यं काव्यं यथा—**

विमलकान्तनितान्तनिशान्तके, प्रकृतिचारुविदारुणसारुणे ।
भववनेऽनवने घननूतने, सरसमाररमारमिताननने ॥ १ ॥

**छायामादाय काव्यं यथा--**

सदोदयो हृद्गहनस्थितानामपि व्ययं य. तमसां विधत्ते ।
जयत्यपूर्वो मृगलाञ्छनोऽसौ श्रीशान्तिनाथःशुचिपक्षयुग्म· ॥ १ ॥

**इति श्री यशोविजयवाचकप्रवरविरचितश्लोकच्छायामादाय मत्कृतिर्यथा—**

भविकहृद्गतिमोहमहातमो, विघटनैकपटुर्गतकल्मषः ।
युगलपक्षविशुद्धियुतोऽक्षयो—जयति चन्द्रजिनः श्रितचन्द्रमाः ॥ १ ॥

कृच्छ्रतरबोध्यः तृतीयः। स हि बहुप्रयत्नेन पदपरावृत्त्यादिना चमत्कृतिहीनकाव्यकर्ता। यथा भोजराजप्रार्थनाकृते चतुर्भिर्विप्रैरतिप्रयत्नेन पदद्वयं विरचितम् तच्चैवम्।

भोजनं देहि राजेन्द्र! घृतसूपसमन्वितम्।

श्लोकार्द्धं सहृदयाह्लादकं पथि मिलितेन कालिदासेन पूरितम् यथा—

"माहिषं च शरच्चन्द्रचन्द्रिकाधवलं दधि।" इति भोजप्रबन्धे।

पदपरावृत्त्यां यथा—

आदिमं पृथिवीनाथमादिमं निष्परिग्रहम्। आदिमं तीर्थनाथं च ऋषभःस्वामिनं स्तुमः॥

प्रथमं पृथिवीपालमग्रिमं निरवग्रहम्। प्रथमं तीर्थनेतारं नाभेयं समुपास्महे॥

चमत्कृति हीनं यथा—

निशायां राजते चन्द्रस्तारकागणसंवृतः, नाशन्नन्धकारौघं वितन्वन् चन्द्रिकाचयम्।

यस्तु सर्वदा "टिड्ढाणञ्, डुकृञ्करणे" इत्यादि शब्दशास्त्रमात्रोद्घोषणपरः[illegible]ना, तथाभूतानलधूमरासभमहानसघटपटदण्डचक्रचीवरहेतुहेत्वाभासादिरूपकर्कशतर्कशास्त्रसमध्ययनेन वा विनष्टकवनशक्तिः साहित्यनिन्दाश्रवणेन च विप्रलब्धः, सोऽत्रासाध्यत्वेनानधिकारी॥

इति श्री सार्वीयसार्वसरस्वतीसुधासेकसिञ्चितसमस्तससारसर्वज्ञशासनसार्वजनीन-सार्वभौमाचार्यश्रीमद्विजयनेमिसूरीश्वर—पट्टाम्बराम्बरमणि—व्याख्यानपीयूषपरिवर्षणप्रावृट्पयोद-कविरत्न-शास्त्रविशारदाचार्यश्रीविजयामृतसूरीश्वर-विनयनिधान-विनेयरत्नमुनिवर्यश्रीपुण्यविजयपादपद्मपरागास्वादलोलुपमधुकरमुनि-धुरन्धरविजयसन्दृब्धायां साहित्यशिक्षामञ्जर्यां प्रथमाप्रमितिः।

# ॥ अथ द्वितीया प्रमितिः ॥

तत्र "कवेः शिक्षा कीदृशी" इति जिज्ञासायां समुपलब्धविलक्षणसरसकाव्यगिरः कवयितुः शिक्षा उच्यते ।

कविशिक्षायां प्रथमत छन्दोज्ञानमावश्यकम् ।

छन्दश्च मात्राऽक्षरभेदेन द्विधा, मात्रा नाम "अक्षिस्पन्दनप्रमाणकः कालविशेषः" ह्रस्वस्वरस्यैकमात्रा गुरुस्वरस्य तु मात्राद्वयम्।

गुरुलक्षणं—संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ १ ॥

मात्राछन्दसि आर्यायाः प्राथम्यात्तामेवादौ ब्रवीमि ।

यस्या पादे प्रथमे, द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये, चतुर्थके पंचदश साऽऽर्या ॥ १

लक्षणमुदाहरणं चेदमेव—

आर्यायाः पथ्या, चपला, विपुला, मुखचपला, जघनचपला, गीत्युपगीत्यादयो भूरिशो भेदाः छन्दःशास्त्रतोऽवसेया विशेषार्थना; तेषु गीतेरतिप्रसिद्धत्वात्तल्लक्षणम् उच्यते ।

आर्या प्रथमार्धसमं, यस्या अपरार्धमाह तां गीतमिति ।

उदाहरणं यथा मम—

अनुकंपाप्रथमाश्रय ! निजपरभेदादिशून्य ! जगबन्धो ! ।
ऋषभजिनेश्वर ! कृपया, मामुद्धरकर्मजालपरतन्त्रात् ॥

**एषैव क्वचिद् गाथा शब्देन व्यवह्रियते यथा—**

अजियं जिय सव्वभयं, सन्तिं च पसन्तसव्वगयपावम् ।
जयगुरु सन्ति गुणकरे, दोवि जिणवरे पणिवयामि ॥ गाहा ॥

**—:: इति ::—**

**अक्षरच्छन्दःसु प्रथममष्टाक्षरमनुष्टुप्, तल्लक्षणं यथा--**

पञ्चमं लघु सर्वत्र, सप्तमं द्विचतुर्थयोः ।
गुरुषष्ठं विजानीयाच्छेषेष्वनियमो मतः ॥

**उदाहरणम्**—नमस्कारसमो मन्त्रः, शत्रुञ्जयसमो गिरिः ।
वीतरागसमो देवो, न भूतो न भविष्यति ॥

**नेदं लक्षणं सार्वत्रिकम् स्थलविशेषे लक्षणानाक्रान्तत्वेऽपि अन्यतयैवानुष्टुप्त्वव्यवहारः यथा—**

तदन्वये शुद्धिमति, प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १ ॥

**अन्येषां छन्दसां सौकर्य्याय गणवर्गः समुपदिष्टः शिष्टैः । गणश्चाष्टधा, मगण, नगण, भगण, यगण, जगण, रगण, सगण, तगण, भेदात् । तेषां स्वरूपदर्शकोऽयंश्लोकः ।**

मस्त्रिगुरुस्त्रिलघुश्च नकारो, भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः, सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥

**यद्वा**—आदिमध्यावसानेषु, भजसा यान्ति गौरवम् ।
यरता लाघवं यान्ति, मनौ तु गुरुलाघवम् ॥ १ ॥

वर्णत्रयसमुदयो गणः। तत्र यस्मिन्गणे त्रयोऽपि वर्णा गुरवः सो मगणः, यत्र त्रयो वर्णाः लघवः सो नगणः। यत्र प्रथमो वर्णः गुरुः शेषौ द्वौ लघू सो भगणः। आद्यो लघुः शेषौ गुरू सो यगणः मध्यमो गुरुरग्रिमान्तिमौ लघू यत्र सो जगणः। यत्र मध्यमो लघुः प्रथमतृतीयौ गुरू सो रगणः। आद्यद्वितीयौ लघू तृतीयश्च गुरुर्यत्र सः सगणः। यत्रान्तिमो लघुः शेषप्रथमद्वितीयौ गुरू स तगणः।

वक्ररेखा (ऽ) गुरोश्चिन्हं सरला च (।) लघोस्तथा॥
गुरुरेको गकारस्तु लकारो लघुरेकक॥ १ ॥

॥ गणस्थापना ॥

| | | | |
|---|---|---|---|
| मगणः। | नगणः। | भगणः। | यगणः। |
| ऽ ऽ ऽ | । । । | ऽ । । | । ऽ ऽ |
| जगणः। | रगणः। | सगणः। | तगणः। |
| । ऽ । | ऽ । ऽ | । । ऽ | ऽ ऽ । |

अष्टाक्षरवृत्तं प्रमाणिका—प्रमाणिका जरौ लगौ

यत्र प्रथमो जगणः द्वितीयो रगणः पश्चाल्लघुवर्णः ततश्च गुरुवर्णः सा प्रमाणिकानाम छन्दः।

उदाहरणं यथा—जिनेशभक्तिरच्युता, द्रुतं हि मोक्षसाधिका।
सदागमे निरूपिता, यतध्वमत्र सज्जना॥

| | जगण. | रगण | ल, | गु, |
|---|---|---|---|---|
| १ प्रमाणिका | जिनेश<br>। ऽ । | भक्तिर<br>ऽ । ऽ | च्यु<br>। | ता<br>ऽ |

## " अथ एकादशाक्षरवृत्तानि सप्त "

१ तत्र-इन्द्रवज्रा—"स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥"

॥ तगणद्वयं जगणः गुरुद्वयं च यत्र तदिन्द्रवज्रानाम छन्दः ॥

यथा—एन्द्रीं श्रियं नाभिसुत स दद्या–दद्यापि धर्मस्थितिकल्पवल्ली ।

येनोप्तपूर्वा त्रिजगज्जनानां, नानान्तरानन्दफलानि सूते ॥ १ ॥

इति संदब्धशतन्यायग्रन्थ–न्यायाचार्य–श्रीमद्यशोविजयोपाध्यायानाम् ।

२ उपेन्द्रवज्रा—"उपेन्द्रवज्रा प्रथमे लघौ सा ॥"

॥ सा इन्द्रवज्रा एव प्रथमे लघुवर्णे सति उपेन्द्रवज्रा स्यात् ॥

यथा—सुवर्णवर्णो हरिणा सवर्णो, मनोवने मे सुमतिर्वलीयान् ॥

अतस्ततो दुष्टकुदृष्टिराग–द्विपेन्द्र ! नैव स्थितिरत्र कार्या ॥ १ ॥

इत्युपाध्याय–श्रीक्षमाकल्याणकीयचैत्यवन्दनचतुर्विंशिकायाम् ।

| | | | | | |
|---|---|---|---|---|---|
| १ इन्द्रवज्रा | तगणः | तगणः | जगण. | गु, | गु, |
| | एन्द्रींश्रि | यनाभि | सुत.स | द | द्या |
| | ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ | ऽ |
| २ उपेन्द्रवज्रा | प्रथमे लघु. | तगण | जगणः | गु, | गु, |
| | सुवर्ण | वर्णोह | रिणास | व | र्णो |
| | । ऽ । | ऽ ऽ । | । ऽ । | ऽ | ऽ |

१ उपजातिः—"अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ताः ॥"

॥ इन्द्रवज्रोपेन्द्रवज्रयोर्मिलितौ पादौ यस्यां सा उपजातिः ॥

यथा—अथ प्रजानामधिप प्रभाते, जायाप्रतिग्राहितगन्धमाल्याम् ॥

वनाय पीतप्रतिबद्धवत्सां, यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

इति कविकुलकिरीटकालिदासस्य ।

स्वागतारथोद्धता-वंशस्थेन्द्रवंशादिभ्योऽपि तथैव भवन्त्युपजातयः ।

२ शालिनी—"शालिन्युक्ता, म्तौ तगौ गोऽब्धिलोकैः ॥"

यस्या मगणः तगणद्वय गुरुद्वयं स्यात् चतुर्भिः सप्तभिश्च विरामः सा शालिनी ॥ यथा मत्कृतिः—

पापं हन्ति, श्रीसमूह च दत्ते, दत्ते कामं धर्मवृद्धिं विधत्ते ॥

धत्ते मुक्तिं, सर्वदा सेव्यमाना, नृणां श्रद्धा-शालिनी वीरपूजा ॥ १ ॥

३ रथोद्धता—" रात्परैर्नरलगै रथोद्धता "

| | | | | | |
|---|---|---|---|---|---|
| १ उपजातिः | प्रथमे लघुः | तगण | जगण | गु, | गु, |
| | अथप्र | जानाम | धिपःप्र | भा | ते |
| | । ऽ । | ऽ ऽ । | । ऽ । | ऽ | ऽ |
| २ शालिनी | मगण. | तगण | तगणः | गु, | गु, |
| | पापह | न्तिश्रीस | मूह च | द | त्ते |
| | ऽ ऽ ऽ | ऽ ऽ । | ऽ ऽ । | ऽ | ऽ |
| ३ रथोद्धता | रगणः | नगणः | रगणः | ल | गु |
| | वीतरा | गमुख | फुल्लप | ङ्क | जा |
| | ऽ । ऽ | । । । | ऽ । ऽ | । | ऽ |

॥ यत्र रगणः, नगणः रगणः लघुः गुरुश्च सा रथोद्धता ॥

यथा—मम मुद्रितकुमुदचन्द्रनाटकटीकायाम्—

वीतरागमुखफुल्लपङ्कजा—न्निःसृतामृतपरागमेदुरम् ॥

अद्वितीयमवदात्तमद्भुतं, जैनशासनमुपास्महे चिरम् ॥ १ ॥

**१ दोधकम्—" दोधकवृत्तमिदं भभभाद्गौ "।**

॥ यत्र भगणत्रयं गुरुद्वयं च तद् दोधकवृत्तम् ॥

यथा—दोधकमर्थविरोधकमुग्रं, स्त्रीचपलं युधि कातरचित्तम् ॥

स्वार्थपरं मतिहीनममात्यं, मुञ्चति यो नृपतिः स सुखीस्यात् ॥ १ ॥

**२ स्वागता—" स्वागतेति रनभाद् गुरुयुग्मम् "।**

॥ यत्र रगण–नगण–भगणाः गुरुयुग्मं च सा स्वागता ॥

यथा—रत्न[illegible]ङ्गविमलैर्गुणतुङ्गै—रर्थिनामभिमतार्पणशक्तैः ॥

[illegible]वागताभिमुखनम्रशिरस्कै—र्जीव्यते जगति साधुभिरेव ॥ १ ॥

---

| | | | | | |
|---|---|---|---|---|---|
| १ दोधकम् | भगणः — दोधक S I I | भगणः — मर्थवि S I I | भगण. — रोधक S I I | गु, — मु S | गु, — ग्रम् S |
| २ स्वागता | रगणः — रत्नभ S I S | नगण — ङ्ग विम I I I | भगण. — लैर्गुण S I I | गु — तु S | गु — ङ्गै S |

## ॥ अथ द्वादशाक्षरवृत्तानि ॥

**१ वंशस्थं—" जतौ तु वंशस्थमुदीरितं जरौ " ।**

**यत्र जगण–तगणौ जगण–रगणौ च भवेतां तद् वंशस्थवृत्तम् ॥**

**यथा–नैषधीयकाव्ये—**

निपीय यस्य क्षितिरक्षिणः कथा–स्तथाद्रियन्ते न बुधाः सुधामपि ॥
नलः सितच्छत्रितकीर्तिमण्डलः, स राशिरासीन्महसां महोज्ज्वलः ॥ १ ॥

**२ तोटकम्—" इहतोटकमम्बुधिसैः प्रथितम् " ।**

**॥ सगणचतुष्कं यत्र तत्तोटकम् ॥**

**यथा**—मणिना वलयं वलयेन मणि–र्मणिना वलयेन विभाति करः ॥
पयसा कमलं कमलेन पयः, पयसा कमलेन विभाति सरः ॥ १ ॥

**३ द्रुतविलम्बितम्—" द्रुतविलम्बितमाह नभौभरौ "**

| | | | | |
|---|---|---|---|---|
| १ वंशस्थ | जगणः<br>निपीय<br>। ऽ । | तगणः<br>यस्यक्षि<br>ऽ ऽ । | जगणः<br>तिरक्षि<br>। ऽ । | रगणः<br>णःकथा<br>ऽ । ऽ |
| २ तोटकम् | सगणः<br>मणिना<br>। । ऽ | सगणः<br>वलय<br>। । ऽ | सगणः<br>वलये<br>। । ऽ | सगणः<br>नमणिः<br>। । ऽ |
| ३ द्रुतविलम्बितम् | नगणः<br>स्वमत<br>। । । | भगणः<br>सम्मत<br>ऽ । । | भगणः<br>शासम<br>ऽ । । | रगणः<br>होदधि<br>ऽ । ऽ |

॥ यत्र छन्दसि नगण–भगणौ भगण रगणौ च तद्द्रुतविलम्बितम् ॥

यथामम—स्वमतसम्मतशास्त्रमहोदधि–प्रमथनाधिगतामृतसन्निधिः ।
परमतागमसंगमबोधवान्न अमृतसूरि–गुरुर्दिशतां शिवम् ॥ १ ॥

इति गुरुस्तुतिषोडशिकायाम्—

१ भुजङ्गप्रयातम्—" भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः " ।
यगणचतुष्कं यत्र तद् भुजङ्गप्रयातम् ।

यथा मम कदम्बगिरिस्तवाष्टके—

जगत्पावन· पावनः पावनानां, सदानन्दकन्दो मुनीनाममन्द ॥
मुहुर्वन्दनीयोऽथ वृन्दारकाणां, कदम्बोऽनिशं राजते शैलराज· ॥ १ ॥

२ त्रयोदशाक्षरवृत्तं प्रहर्षिणीनाम—

" त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् "

यत्र मगण, नगण, जगण, रगणाः गुरुवर्णश्च त्रिभिर्दशभिश्च विरामः सा प्रहर्षिणी ।

यथा पण्डितराजजगन्नाथस्य—

स्वच्छन्दं दलदरविन्द [१] ते मरन्दं, विदन्तो विदधतु गुञ्जितं मिलिन्दाः ॥
आमोदानथ हरिदन्तराणि नेतुं, नैवान्यो जगति समीरणात्प्रवीण· ॥ १ ॥

| | यगणः | यगण· | यगणः | यगणः |
|---|---|---|---|---|
| १ भुजङ्गप्रयातम् | जगपा<br>। ऽ ऽ | वनःपा<br>। ऽ ऽ | वन.पा<br>। ऽ ऽ | वनाना<br>। ऽ ऽ |

| | मगण. | नगण | जगण | रगणः | गु |
|---|---|---|---|---|---|
| २ प्रहर्षिणी | स्वच्छन्द<br>ऽ ऽ ऽ | दलद<br>। । । | रविन्द<br>। । ऽ | ते मर<br>ऽ । ऽ | न्दम्<br>ऽ |

चतुर्दशाक्षरवृत्तं वसन्ततिलका नाम—

१ " ज्ञेया वसन्ततिलका तभजा जगौ गः " ।

यत्र तगण–भगण–जगण–जगणाः, गुरुद्वयं च सा वसन्ततिलका । यथा—

यैः शान्तरागरुचिभिः परमाणुभिस्त्वं, निर्मापितस्त्रिभुवनैकललामभूत ! ॥
तावन्त एव खलु तेऽप्यणवः पृथिव्यां, यत्ते समानमपरं नहि रूपमस्ति ॥ १ ॥

इति भक्तामरस्तोत्रे ।

पञ्चदशाक्षरवृत्तं मालिनी—

२ " ननमयययुतेयं मालिनी भोगिलोकैः " ।

यत्र नगण–नगण–मगण–यगण–यगणाः अष्टभिः सप्तभिश्च विरामः सा मालिनी ।

यथा—भविककमलभानुर्भानुसंदीप्तभानु–
दुरितवनकृशानुः प्राप्तमोक्षाद्रिसानुः ॥
विजितकुरिपुसार्थः साधितागापरार्थो,
भवतु मम स नाथः शान्तये शान्तिनाथः ॥ १ ॥

| | तगणः | भगण | जगण. | जगण | गु, | गु, |
|---|---|---|---|---|---|---|
| १ वसन्ततिलका | यैः शान्त<br>ऽ ऽ । | रागरु<br>ऽ । । | चिभि प<br>। ऽ । | रमाणु<br>। ऽ । | भि<br>ऽ | स्त्वम्<br>ऽ |

| | नगण. | नगण. | मगण. | यगण. | यगण |
|---|---|---|---|---|---|
| २ मालिनी | भविक<br>। । । | कमल<br>। । । | भानुर्भा<br>ऽ ऽ ऽ | नुसंदी<br>। ऽ ऽ | प्तभानु<br>। ऽ ऽ |

इत्यस्मत्प्रगुरुप्रणीतचैत्यवन्दनचतुर्विंशतिकायाम् ।

षोडशाक्षरवृत्तं पञ्चचामरम्—

१ "प्रमाणिका पदद्वयं, वदन्ति पञ्चचामरम्" ।

अथवा लघुर्गुरुर्लघुर्गुरुरित्येवं षोडशाक्षरपर्यन्तं स्यात् तत्पञ्चचामरम् ।

यथा—नमामि नेमितीर्थपं सदा सुशीलशालिनं ।
समस्तसूरिचक्रचक्रवर्तिताविराजिनम् ॥
प्रदीप्रदीपमालिकाधिकप्रकाशशालिकां ।
विधाय विश्वनालिकां दधानमात्मसम्भवम् ॥ १ ॥

इत्यस्मत्प्रगुरोर्गुरुभ्रात्राचार्यश्रीमद्विजयलावण्यसूरिरचितश्रीदेवगुर्वष्टके ।

अथ सप्तदशाक्षरवृत्तानि । तत्र—

२ शिखरिणी–"रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी"

यगण–मगण–नगण–सगण–भगणाः लघुवर्णः गुरूवर्णश्च षड्भिः एकादशभिश्च विरामः सा शिखरिणी, यथा—मम शिखरिणी छन्दोबद्धं मयूरदूतम्, तथा च तदग्रिमं पद्यम्—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ पञ्चचामरम् | जगणः | रगणः | ल. | गु | जगणः | रगणः | ल. | गु. |
| | नमामि | नेमिती | र्थ | प | सदासु | शीलशा | लि | नम् |
| | I S I | S I S | I | S | I S I | S I S | I | S |
| २ शिखरिणी | यगणः | मगणः | नगणः | सगणः | भगणः | ल. | गु. | |
| | निसर्गा | नन्दाली | दधत | मनिशं | नेमिजि | न | पम् | |
| | I S S | S S S | I I I | I I S | S I I | I | S | |

निसर्गानन्दालीर्दधतमनिशं नेमिजिनपं ।
प्रभाते वन्दित्वाऽतरुणतरणिक्षान्तवपुषम् ॥
पुराद्बाह्योद्याने विपुलतरसौन्दर्यसुभगे ।
प्रभोश्चैत्ये ऽद्राक्षीदमृतविजय· केकिविहगम् ॥ १ ॥

**१ पृथ्वीवृतम्–"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः"**

**यस्मिन् छन्दसि जगण–सगण–जगण–सगण–यगणाः लघुवर्णश्च गुरूवर्णश्च अष्टमिर्नवभिश्च विश्रामः तत्पृथ्वीनामवृत्तम् ।**

**यथा**—वरं विभववन्ध्यता सुजनभावभाजां नृणा–
मसाधुचरितार्जिता न पुनरूर्जिता सम्पद ॥
कृशत्वमपि शोभते सहजमायतौ सुन्दरम् ।
विपाकविरसा न तु श्वयथुसंभवा स्थूलता ॥ १ ॥

**इति श्रीसोमप्रभाचार्यरचितसूक्तमुक्तावल्याम् ।**

**२ मन्दाक्रान्ता—मन्दाक्रान्ता–ऽम्बुधिरसनगै–र्मो भनौगौय युग्मम् ॥**

**यस्यां मगण–भगण–नगणाः गुरुद्वयं ततश्च यगणद्वयं चतुर्भिः**

| | जगण. | सगणः | जगण | सगण | यगणः | ल | गु |
|---|---|---|---|---|---|---|---|
| १ पृथ्वी | वर वि | भवव | न्ध्यतासु | जनभा | वभाजा | नृ | णाम् |
| | । ऽ । | । । ऽ | । ऽ । | । । ऽ | । ऽ ऽ | । | ऽ |

| | मगण. | भगण. | नगणः | गु | गु. | यगणः | यगण. |
|---|---|---|---|---|---|---|---|
| २ मन्दाक्रान्ता | योज्ञाना | भ्रौज्ञुचि | रुचियु | जि | म्रो | ज्ज्वलज्ज्वा | लमाले |
| | ऽ ऽ ऽ | ऽ । । | । । । | ऽ | ऽ | । ऽ ऽ | । ऽ ऽ |

षड्भिः सप्तभिश्च विश्रान्तिः सा मन्दाक्रान्ता ।

यथा मम–यो ज्ञानाग्नौ शुचिरुचियुजि प्रोज्ज्वलज्ज्वालमाले ।

नव्यं हव्यं दिशतिकुटिलं कर्म एवास्ति नान्यत् ॥

योगिध्येयं निखिलजनतावन्द्यपादारविन्दं ।

वन्देऽमन्दाऽविचलमतये नेमितीर्थाधिराजम् ॥ १ ॥

श्रीनेमितीर्थाधिराजाष्टके ।

१ हरिणी–"रसयुगहयैर्न्सौम्रौस्लौगो यदा हरिणी तदा"।

यत्र नगण–सगण–मगण–रगण–सगणाः लघुगुरू च षड्भिः चतुर्भिः सप्तभिश्च विरामः सा हरिणी ।

यथा सिन्दूरप्रकरे–हरति कुमतिं भिन्ते मोहं करोति विवेकितां ।

वितरति रतिं सूते नीतिं तनोति विनीतताम् ॥

प्रथयति यशो धत्ते धर्मं व्यपोहति दुर्गतिं ।

जनयति नृणां किं नाभीष्टं गुणोत्तमसङ्गमः ॥ १ ॥

२ अष्टादशाक्षरवृत्तं चित्रलेखा—

" मन्दाक्रान्ता, नयुगलजठरा, कीर्तिता चित्रलेखा ॥ "

| | नगणः | सगण. | मगणः | रगणः | सगणः | ल | गु. |
|---|---|---|---|---|---|---|---|
| १ हरिणी | हरति | कुमतिं | भिन्तेमो | हकरो | तिविवे | कि | ताम् |
| | । । । | । । ऽ | ऽ ऽ ऽ | ऽ । ऽ | । । ऽ | । | ऽ |

| | मगणः | गु | नगणः | नगणः | गु. | गु | यगण. | यगणः |
|---|---|---|---|---|---|---|---|---|
| २ चित्रलेखा | काङ्क्षेऽसु | भिम | अगति | मृगद | शा | सा | स्वरूपं | यदासी |
| | ऽ ऽ ऽ | ऽ | । । । | । । । | ऽ | ऽ | । ऽ ऽ | । ऽ ऽ |

मन्दाक्रान्तासदृशमिदं वृत्तं किन्त्वयमेव विशेषः अस्मिन् छन्दसि, मध्ये नगणद्वयम् अर्थात् मन्दाक्रान्तायां मध्ये पञ्चलघवो वर्णा आगच्छन्ति अस्यां च षट् इति ।

यथा—शंकेऽमुष्मिञ्जगति मृगदृशां साररूपं यदासी—
दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ॥
नैतादृक् चेत् कथमुदधिसुता—मन्तरेणाच्युतस्य ।
प्रीतं तस्यां नयनयुगलं चित्रलेखाद्भुतायाम् ॥ १ ॥

१ एकोनविंशत्यक्षरं वृत्तं "शार्दूलविक्रीडितम्—

"सूर्याश्वैर्मसजस्तताः सगुरवः, शार्दूलविक्रीडितम् ॥"

यत्र मगण–सगण–जगण–सगण–तगण–तगणाः गुरूवर्णश्च द्वादशभिः सप्तभिश्च विरामः तत् शार्दूलविक्रीडितम् ।
यथा मम मयूरदूते गुरुस्तुतिः—

प्रातर्दर्शनतोऽपि यस्य सुजनैः, श्लाघ्योदय प्राप्यते ।
नित्यं नन्दनयत्यनेकविबुधान्, विज्ञानधारंचित ॥
यत्पत्पद्मसुसेवनामृतरसार—स्वाद सुलावण्यद ।
स श्री नेमिगुरु सदा विजयतात्, सप्तर्षियुक्तो ध्रुवः ॥ १ ॥

| | मगणः | सगणः | जगणः | सगण | तगणः | तगण | गु, |
|---|---|---|---|---|---|---|---|
| १ शार्दुलविक्रीडित | प्रातर्द | र्शनतोऽ | पियस्य | सुजनैः | श्लाघ्योद | यःप्राप्य | ते |
| | ऽ ऽ ऽ | । । ऽ | । ऽ । | । । ऽ | ऽ ऽ । | ऽ ऽ । | ऽ |

१ एकविंशत्यक्षरवृत्तं स्रग्धरा नाम।

"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्"

यस्यां मगण–रगण–भगण–नगण–यगण–यगण–यगणाः सप्तभिः सप्तभिः वर्णैः विरामः सा स्रग्धरा।

यथा—आमूलालोलधूलीबहुलपरिमलालीढलोलालिमाला–
झंकारारावसारामलदलकमलागारभूमिनिवासे!॥
छायासंभारसारे! वरकमलकरे! तारहाराभिरामे!।
वाणीसंदोहदेहे! भवविरह वरम् देहि मे देवि! सारम्॥ १॥

॥ अथ विषमच्छन्दांसि ॥

२. पुष्पिताग्रा—"अयुजि नयुगरेफतो यकारो, युजि तु नजौ जरगाश्च पुष्पिताग्रा॥"

यत्र विषमे–प्रथमे तृतीये पादे–नगणद्वयं रगण–यगणौ च। युजि तु अर्थात् द्वितीये चतुर्थे पादे तु नगण–जगण–जगण–रगणाः गुरुवर्णश्च सा पुष्पिताग्रा॥

| | मगण. | रगण. | भगणः | नगण | यगणः | यगणः | यगणः |
|---|---|---|---|---|---|---|---|
| १ स्रग्धरा | आमूला | लोलधू | लीबहु | लपरि | मलाली | ढलोला | लिमाला |
| | ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ |

| | प्रथमतृतीयपादयो. । | | | | द्वितीयचतुर्थपादयोः । | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | नगणः | नगणः | रगण. | यगणः | नगणः | जगण | जगणः | रगणः | गु, |
| २ पुष्पिताग्रा | कमलि | निमल | नीकरो | षिचेतः | किमिति | बकैर | वहेलि | तानमि | जैः |
| | । । । | । । । | ऽ । ऽ | । ऽ ऽ | । । । | । ऽ । | । ऽ । | ऽ । ऽ | ऽ, |

यथा—पण्डितराजजगन्नाथस्य—

कमलिनि ! मलिनीकरोषि चेतः, किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते, जगति जयन्ति चिरायुषो मिलिन्दाः ॥ १ ॥

**१ सुन्दरी—"अयुजोर्यदि सौ जगौ युजोः, सभराल्लगौ यदि सुन्दरी तदा ॥"**

यत्र अयुग्मे प्रथम–तृतीययोः सगण–सगण–जगणाः गुरुवर्णश्च युग्मे द्वितीय–चतुर्थयोः सगण–भगण–रगणाः लघुवर्णः गुरुवर्णश्च सा सुन्दरी। वियोगिनी, वैतालीयेत्यादिः, अस्या एव नामान्तरम् यथा भारवेः

विहितां प्रियया मनः प्रिया–मथ निश्चित्य गिरं गरीयसीम् ॥
उपपत्तिमदूर्जिताशयं, नृपमूचे वचनं वृकोदरः ॥ १ ॥

**२ उद्गता–प्रथमे सजौ यदि सलौ च, नसजगुरुकाण्यनन्तरम् यद्यथ भनजलगाः स्युरथो, सजसा जगौ च भवतीयमुद्गता**

| | १ प्रथमतृतीयपादयो । | | | | २ द्वितीय चतुर्थपादयो । | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ सुन्दरी | सगण | सगण | जगण | गु | सगणः | भगणः | रगण | ल | गु. |
| | विहिता | प्रियया | मन प्रि | या, | मथनि | श्चित्यगि | रंगरी | य | सीम् |
| | I I S | I I S | I S I | S | I I S | S I I | S I S | I | S |

| | प्रथमपादस्य | | | | | द्वितीयपादस्य | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| २ उद्गता | सगण | जगण | सगण. | ल. | | नगण. | सगणः | जगणः | गु. | |
| | अथवा | सवस्य | वचने | न, | | रुचिर | वदन | स्त्रिलोच | नम् | |
| | I I S | I S I | I I S | I | | I I I | I I S | I S I | S | |
| | तृतीयपादस्य | | | | | चतुर्थपादस्य | | | | |
| | भगणः | नगणः | जगण | ल, | गु | सगण | जगण | सगणः | जगणः | गु. |
| | क्षान्तिर | हितम | सिराध | यि | तु, | विधिव | त्तपांसि | विदधे | धनञ्ज | यः |
| | S I I | I I I | I S I | I | S | I I S | I S I | I I S | I S I | S |

यत्र प्रथमे पादे सगण–जगण–सगणाः लघुवर्णश्च, तदनन्तरं द्वितीये पादे नगण–सगण–जगणाः गुरुवर्णश्च, यद्यथ तृतीये पादे भगण–नगण–जगणाः लघुवर्णः गुरुवर्णश्च, अथो चतुर्थे पादे सगण-जगण–सगण–जगणाः गुरुवर्णश्च, सा उद्गतानामछन्दः ।

यथा किराते—अथ वासवस्य वचनेन, रुचिरवदनस्त्रिलोचनम् ॥
क्लान्तिरहितमभिराधयितुं, विधिवत्तपांसि विदधे धनञ्जयः ॥१॥

अथ द्वाविंशत्यक्षरवृत्तं "भद्रकं", त्रयोविंशत्यक्षरं "अश्वललितं, चतुर्विंशत्यक्षरा "मत्ताक्रीडा, तन्वी" च, पञ्चविंशत्यक्षरा-"क्रौञ्चपदा", षड्विंशत्यक्षरं "भुजङ्गविजृम्भितम्" ततः परं सप्तविंशत्यक्षरमारभ्य नानाविधानि दण्डकवृत्तानि. विस्तरभ्यान्नेह प्रदर्श्यन्ते । विशेषार्थिना छन्दोऽनुशासन–छन्दोमञ्जरी–वृत्तरत्नाकर-श्रुतबोधप्रमुखाः छन्दोग्रन्था अवलोकनीयाः ।

अथ च ग्रन्थादौ कविना प्रायः शुभगणः संयोज्यः शुभफलदत्वात् । नेतरो विपरीतत्वात् ।

तथाच तत्स्वरूपदर्शकः श्लोकः—

मो भूमिस्त्रिगुरुः श्रियं दिशति यो, वृद्धिं जलं चादिलो ।
रोऽग्निर्मध्यलघुर्विनाशमनिलो, देशाटनं सोऽन्त्यग· ॥
तो व्योमान्तलघुर्धनापहरणं, जोऽर्को रुजं मध्यगो ।
भश्चन्द्रो यश उज्ज्वलं मुखगुरु–र्नो नाक आयुस्त्रिल· ॥ १ ॥

फलं चेदं ग्रन्थनेतुः कर्तुः पठितुर्वा यथायोग्यं भवति ।

गणदेवतादीनां यन्त्रम् ।

| गणनाम | मगणः | यगणः | रगण. | सगणः | तगण. | जगणः | भगणः | नगणः |
|---|---|---|---|---|---|---|---|---|
| स्वरूपम् | S S S | I S S | S I S | I I S | S S I | I S I | S I I | I I I |
| देवता | पृथ्वी | जलम् | अग्निः | वायु. | आकाशः | सूर्य. | चन्द्रः | नाक |
| फलम् | श्री. | वृद्धिः | विनाशः | भ्रमणम् | धननाशः | रोग. | सुयशः | आयुः |

**अथवा वर्णानाश्रित्यापि फलश्रुतिः ।**

**यथा**—अवर्णात्संपत्तिर्भवति मुदिवर्णाद्धनशता-
न्युवर्णादल्याति[1] सरभसमृवर्णाद्धरहितात् ॥
तथा ह्येचै[2] सौख्यं ङञणरहितादक्षरगणात्
पदादौ विन्यासाद्धरबहल्हाहाविरहितात् ॥ १ ॥

**अत्रापवादः—**

देवतावाचका: शब्दा: ये च भद्रादिवाचका: ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥

**इति श्री सार्वीयसार्वसरस्वतीसुधासेकसिञ्चितसमस्तसंसारसर्वज्ञशासनसार्वजनीन-सार्वभौमाचार्यश्रीमद्विजयनेमिसूरीश्वर–पट्टाम्बराम्बरमणि–व्याख्यानपीयूष-परिवर्षणप्रावृट्पयोद–कविरत्न–शास्त्रविशारदाचार्यश्रीविजयामृतसूरीश्वर-विनयसंनिधानविनेयरत्नमुनिवर्यश्रीपुण्यविजयपादपद्मपरागास्वाद-लोलुपमधुकरमुनिधुरंधरविजयसंदृब्धाया**

**साहित्यशिक्षामञ्जर्यां**

**द्वितीया प्रमितिः ॥**



---

१ आनन्द. । २ ए, ऐ, ओ, औ ।

## ॥ अथ तृतीया प्रमितिः ॥

"कश्च काव्ये चमत्कारो" ? तत्र चमत्कारो नाम–आह्लादकत्वम्। स शब्दगतः–अर्थगतश्चेतिद्विविधः। यत्र शब्दश्रवणमात्रेण विलक्षणचित्ताह्लादो भवेत्, स, शब्दगतः।

यथा—शारदा शारदाम्भोज–वदना वदनाम्बुजे ॥
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ॥ १ ॥

अर्थगतो द्वेधा–वाच्यार्थगतः, व्यङ्ग्यार्थगतश्चेति। यत्र व्यङ्ग्यार्थापेक्षया वाच्यार्थस्यातिशायित्वं, स, वाच्यार्थगतः।

यथा—एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ॥
अल्पस्य हेतोर्बहुहातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥१॥

व्यङ्ग्यार्थश्च, क्वचिद्रसरूपः, क्वचिद्भावरूपः, क्वचिच्चालङ्कारादिरूपः। रसोनाम "विभावानुभावव्यभिचारिभिरभिव्यक्तः" स्थायी भावो रसः[१] ॥

१ रतिर्हासश्चशोकश्च क्रोधोत्साहौ भयं तथा ॥ जुगुप्सा विस्मयश्चेत्थमष्टौप्रोक्ताः शमोऽपि च ॥ १ ॥ एते आस्वादाङ्कुरमूलभूताः स्थिरतया वर्तमानाः स्थायिभावा नव।

२ ॥ विभावाः ॥ रत्यादिस्थायिभावोद्बोधका विभावाः। ते च द्विप्रकाराः आलम्बनोद्दीपनभेदात्। यं आलम्ब्य रसोद्गमः भवति स आलम्बनविभावः। ये रसमुद्दीपयन्ति ते उद्दीपनविभावाः।

३ ॥ अनुभावाः ॥ तत्तत्कारणैरुद्बुद्धं स्थायिभावं ये बहिः प्रकाशयन्ति तेऽनुभावाः।

४ ॥ व्यभिचारिभावाः ॥ रत्यादिस्थायिभावे ये आभिमुख्येन चलन्ति ते व्यभिचारिभावाः ॥

स च नवधा, शृङ्गारादिभेदात्—तथाहि—

शृंगारहास्यकरूण–रौद्रवीरभयानकाः ॥
बीभत्सोऽद्भूत इत्यष्टौ रसा॰ शान्तस्तथा मत॰ ॥ १ ॥

१ तत्र [1]शृङ्गारः । रतिस्थायिभावकः, रागवन्नायकनायिकालम्बनकः, चन्द्रचन्दनरोलम्बाद्युद्दीपनकः, भ्रूविक्षेपकटाक्षाद्यनुभावकः, शृङ्गारनामा रसः, स च संभोगविप्रलम्भभेदेन द्विविधः । तत्र संभोगशृङ्गारो यत्र परस्परमनुरागिणौ विलासिनौ दर्शनस्पर्शनादीन् विद्धतः सः—

यथा—शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै–
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ॥
विश्रब्धं परिचुम्य जातपुलकामालोक्य गण्डस्थलीं ।
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ १ ॥

विप्रलम्भः ॥ यत्र प्रकृष्टा रतिः अभीष्टं न उपैति स विप्रलम्भशृङ्गारः ।

यथा—तां जानीया॰ परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ॥
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥ १ ॥

१ . ॰ विष्णुदैवत., करुण, वीर, बीभत्स, रौद्र, भयानकैः सह विरोधी ।

२ "[१]हास्यः ।" हासस्थायिभावकः, विकृताकारवाक्चेष्टावज्जनालम्बनकः, तदीयचेष्टोद्दीपनकः, अक्षिसंकोचनवदनविकाशानुभावकः, निद्रालस्यादिसंचारिभावकः, हास्यो रसः ।

यथा—गुरोर्गिरः पंच दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च ॥
अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः ॥१॥

यथा-वा-श्रीतातपादैर्विहिते निबन्धे निरूपिता नूतनयुक्तिरेषा ॥
अङ्गं गवां पूर्वमहो पवित्रं नवा कथं रासभधर्मपत्न्याः ॥ १ ॥

३ ॥ करुणः[२] ॥ इष्टनाशादनिष्टसम्बन्धात् शोकस्थायिभावकः, शोच्यजनावलम्बनः, तदीयदाहाद्युद्दीपनः, दैवनिन्दाद्यनुभावकः, विषादजडतादिव्यभिचारिभावकः, करुणरसः ॥

यथा—विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ॥
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्तनम् ॥ १ ॥

४ ॥ रौद्रः[३] ॥ क्रोधस्थायिभावः, शत्रुरालम्बनः, तच्चेष्टोद्दीपनः, भ्रूभङ्गबाहुस्फोटनोग्रतायुधग्रहणादय अनुभावाः, मोहामर्षादयो व्यभिचारिणः, यत्र तत्र रौद्ररसः ।

१ श्वेतवर्णः, प्रमथ(शिवगणविशेष)दैवत., करुणभयानकाभ्यां विरोधवान् ।
२ कपोतवर्णः, यमदैवत., हास्यशृङ्गाराभ्यां विरोधोऽस्य, ।
३ रक्तवर्णः, रुद्रदैवत., शृङ्गारहास्यभयानकैः सह विरोधी ।

यथा—चंचद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ॥
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचाँस्तव देवि ! भीमः ॥ १ ॥

५ ।॥ वीरः ॥ उत्साहः स्थायिभावः, विजेतव्यालम्बनविभावः, प्रतिनायकवर्तिनयविनयप्रतापविक्रमादिरुद्दीपनविभावः, सहायान्वेषणानुभावः, धृतिमतिगर्वस्मृत्यादयः संचारिभावाः, यत्र स वीरसः। स दानवीर, धर्मवीर, युद्धवीर, दयावीर, भेदेन चतुर्विधः। उदाहरणं क्रमेण यथा—

॥ दानवीरः ॥ कियदिदमधिकं मे यद्विजायार्थयित्रे
कवचमरमणीयं कुण्डले चार्पयामि ॥
अकरुणमवकृत्य द्राक्कृपाणेन निर्य-
द्वहलरुधिरधारं मौलिमावेदयामि ॥ १ ॥

॥ धर्मवीरः ॥ राज्यं च वसु देहं च भार्या भ्रातृसुताश्च ये ॥
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम् ॥ १ ॥

धर्मवीराः श्रीपार्श्वमहावीरप्रभृतयः।

यथा—शठकमठविमुक्ताग्रावसंघातघात-
व्यथितमपि मनो न ध्यानतो यस्य नेतुः ॥
अचलदचलतुल्यं विश्वविश्वैकधीरः
स दिशतु शिवमीशः पार्श्वनाथो जिनो वः ॥ १ ॥

१ सुवर्णवर्णः, महेन्द्रदैवत., भयानकशान्तरसाभ्यां सह विरोधी।

॥ युद्धवीरः ॥ भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किंचिद्गतम् ॥
नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥१॥

॥ दयावीरः ॥ शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ॥
तृप्तिं न पश्यामि तवापि तावत् किं भक्षणात्त्वं विरतो गरुत्मन् ॥१॥

६ ॥ [1]भयानकः ॥ यत्र भयस्थायिभावः, यस्माद्भयमुत्पद्यते–स आलम्बनविभावः, विकृतस्वरश्रवणाद्युद्दीपनः, वैवर्ण्यगद्गद्भाषणमनुभावः, स्वेदरोमाञ्चादयो व्यभिचारिभावाः, स भयानकरसः ।

यथा—नष्टं वर्षवरैर्मनुष्यगणना–भावादपास्य त्रपा–
मन्तः कंचुकिकंचुकस्य विशति, त्रासादयं वामनः ॥
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशंकिनः ॥ १ ॥

यथा–वा—घोरमम्भोधरध्वानं निशम्य व्रजबालकाः ॥
मातुरङ्के निलीयन्ते सकम्पविकृतस्वराः ॥ १ ॥

७ ॥ [2]बीभत्सः ॥ यत्र जुगुप्सा स्थायिभावः, दुर्गन्धमांसरुधिरादीन्यालम्बनानि, तत्र कृमिपाताद्युद्दीपनानि, निष्ठीवनवदन-

[1] कृष्णवर्णः, कालदैवतः, शृङ्गार, वीर, रौद्र, हास्यशान्तैर्विरोधीः ।
[2] नीलवर्णः, महाकालदैवतः, शृङ्गारेण सार्धं विरोधीः ।

विकारनयनसंकोचादयोऽनुभावाः, मोहापस्मारावेगव्याध्यादयः संचारिभावाः, सः, बीभत्सो रसः ॥

यथा—उत्कृत्योत्कृत्य कृत्तिं प्रथममथपृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ॥
आत्तस्नाय्वन्त्रनेत्रात्प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ १ ॥

८ ॥ [1]अद्भुतः ॥ यत्र विस्मयस्थायिभावः, विस्मयजनककार्यकर्तालम्बनः, विस्मयावहकर्म उद्दीपनम्, चकिताद्यनुभावः, हर्षादिसंचारिभावः, तत्राद्भुतरसः ।

यथा—पादांगुष्ठनिपीडितामरगिरि—त्रुट्यत्तटीविभ्रम—
भ्रूगोलातिभरासहाहिनिवहश्यामास्यनिर्यद्वृहत् ॥
निःश्वासोच्छलिताब्धिवारिलहरी, विभ्रष्टतारावलि
पायाद्वो जिनवीरशैशववयो—व्यापारलीलारसः ॥ १ ॥

९ ॥ [2]शान्तः ॥ शमस्थायिभावः, संसारानित्यता परमात्मस्वरूपं वाऽऽलम्बनम्, पुण्यतीर्थसाधुसङ्गनिर्मलारण्यादि उद्दीपनम्, रोमाञ्चाद्यनुभावः, निर्वेदहर्षस्मरणादयो व्यभिचारिणः, यत्र स शान्तोरसः ।

---

१ पीतवर्ण., गन्धर्वदैवत ,

२ धवलवर्णः, नारायणदैवत., शृङ्गारहास्यरौद्रवीरभयानकैः सह विरोधी ।

यथा—कदाऽहं कादंम्बे विमलगिरिशृङ्गारतिलके
वसानः सन्तापं त्रिविधमपि तीव्रं प्रशमयन् ॥
परात्मन्यात्मानं समरसविलीनं च विदधत्
समानेष्ये सोऽहं ध्वनितहृदयोऽशेषदिवसान् ॥ १ ॥

( श्रीकदम्बगिरितीर्थराजस्तोत्रे )

"व्यङ्ग्यार्थः क्वचिद्भावरूपः" इति यदुक्तं तत्र भावः कः ? अत्रोच्यते–यत्र संचारिभावस्य प्राधान्यं, देवनृपगुरुविषया च रतिः, किञ्चिदुद्बुद्धमात्रस्थायिभावः, तत्र रसः पुष्टितामलभमानो भाव इत्यभिधीयते । स च रसस्वरूप एव–

यदुक्तम्—न भावहीनोऽस्ति रसो, न भावो रसवर्जितः ।
परस्परकृता सिद्धि–रनयो रसभावयोः ॥ १ ॥

संचारिभावप्राधान्यं—

यथा—एवंवादिनि देवर्षौ, पार्श्वे पितुरधोमुखी ॥
लीलाकमलपत्राणि, गणयामास पार्वती ॥ १ ॥

[1]अत्रावहित्थारूपस्य संचारिभावस्य प्रधानता ।

देवविषयारतिर्यथा—दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक ! प्रकामम् ॥
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि

---

१ अवहित्था–आकारगुप्तिः ।

मुनिविषया रतिर्यथा—प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियम
प्रकृत्या कल्याणी मतिरनवगीत परिचय॰ ॥
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ १ ॥

राजविषया रतिर्यथा—त्वद्वाजिराजिनिर्धूत–धूलीपटलपङ्किलाम् ॥
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥ १ ॥

किञ्चिदुद्बुद्धस्थायिभावो यथा—

हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारंभ इवाम्बुराशि॰ ॥
उमामुखे बिम्वफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ १ ॥

अत्र प्रसङ्गात् रसाभासभावाभासस्वरूपं किञ्चित्प्रदर्श्यते । यत्र अनौचित्यप्रवृत्तिर्भवति रसभावादीनां तत्र रसाभासः, भावाभासश्च । रसाभासो यथा—

जघनस्थलनद्धपत्रवल्ली गिरिमल्लीकुसुमानि काऽपि भिल्ली
अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कचयाञ्चकार भर्त्रा ॥ १ ॥

अत्राधमपात्रगता रतिर्वर्ण्यते इति शृङ्गाररसाभासः ।

भावाभासो यथा—[1]राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी ।

---

१. पूर्णिमाचन्द्रः ।

तत् किं करोमि विदधे कथमत्र मैत्रीं
तत् स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥ १ ॥

अत्र चिन्तारूपसंचारिभावस्यानुकूलनायकविषयतया आभासत्वमिति भावाभासः ।

एवं यत्र गुरुविषयकक्रोधस्तत्र रौद्ररसाभासः । उत्तमपात्रे भयस्तदाभयानकाभासः । तथैवान्यत्रापि यथायोग्यमवसेयम् । "क्वचिच्चालङ्कारादिरूपः" इति यदुक्तम्—तत्रालङ्कारस्वरूपमग्रेऽभिधास्यते । आदिपदात् वस्तुरूपव्यङ्ग्यार्थोऽपि ज्ञेयः ।

अथ व्यङ्ग्यार्थरूपध्वनिकाव्यभेदाः प्रपंच्यन्ते ॥

ध्वनिकाव्यं नाम—यत्र वाच्यार्थापेक्षया व्यङ्ग्यार्थस्याधिकचमत्कारकारित्वम् । तदेवोत्तमं काव्यं कथ्यते कविभिः ।

तत्र ध्वनिः—लक्षणामूलः अभिधामूलश्चेति द्विविधः । लक्षणामूलोध्वनिर्नाम—यत्र वाच्यार्थस्याविवक्षा लक्षणया अर्थोऽवसीयते, व्यज्यते च कश्चिदर्थविशेषः सः । तस्य भेदौ द्वौ—अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्यश्चेति । अर्थान्तरसंक्रमितवाच्यो—यत्र व्यर्थीभूतो वाच्यार्थः स्वमर्थमपरित्यज्याजहत्स्वार्थलक्षणया स्वविशेषरूपेऽर्थान्तरे संक्रामति तत्र ।

यथा—कदली कदली करभ करभ, करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुला—मिदमूरुयुगं न चमूरुदृशः ॥

२. मृगाक्ष्याः ।

अत्र द्वितीय कदल्यादिशब्दाः पुनरुक्तदोषदूषिता अभिधया कदल्यादिरूपमुख्यार्थं न बोधयन्ति किन्तु लक्षणया जाड्यादिगुण-विशिष्टकदल्याद्यर्थमिति वाच्यस्य जाड्यादिगुणविशिष्टान्तरे संक्र-मितत्वात् अर्थान्तरसंक्रमितवाच्यः । जाड्यातिशयश्च व्यङ्ग्यः ।

अत्यन्ततिरस्कृतवाच्यस्तत्र यत्रानुपयुज्यमानो वाच्यार्थः स्वमुख्यार्थं सर्वथैव विहाय जहल्लक्षणयाऽर्थान्तरे परिणमति । अत्र वाच्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् ।

यथा—रविसंक्रान्तसौभाग्य–स्तुषारावृत्तमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥

अत्रान्धत्वं सचेतने एव संभवतीति तदर्थं सर्वथैव परित्यज्या-न्धशब्दो लक्षणया अप्रकाशरूपमर्थं बोधयति । अप्रकाशातिशयश्च व्यङ्ग्यः ।

अभिधामूलत्वं नाम—यत्र वाच्यार्थस्य मुख्यार्थत्वम् । स च द्विविधः असंलक्ष्यक्रमवाच्यः संलक्ष्यक्रमवाच्यश्च । तत्रासंलक्ष्यक्रम-वाच्यो रसभावादिरूपः, रसभावादिव्यङ्ग्यप्रतीतेः क्रमिकत्वेऽपि क्रमस्य दुर्बोध्यत्वात्, असंलक्ष्यक्रमत्वम्–इति असंलक्ष्यक्रमवाच्यः । एतन्मूलकत्वेनैव पूर्वमुक्तं यत् व्यङ्ग्यार्थः क्वचिद् रसरूपः इत्यादि ।

संलक्ष्यक्रमस्तु शब्दशक्त्युत्थः अर्थशक्त्युत्थः शब्दार्थोभय-शक्त्युत्थ इति त्रिविधः ।

शब्दशक्त्युत्थो द्वेधा—वस्तुरूपव्यङ्ग्यः अलङ्काररूपव्यङ्ग्यश्चेति। अत्र वस्तुशब्देन अलङ्कारभिन्नं सर्वं ग्राह्यम्। अलङ्कारस्य पृथगभिहितत्वात्।

यत्र शब्दशक्त्यैव वस्तुव्यञ्जनं भवति तत्र वस्तुरूपशब्दशक्त्युत्थः, अलङ्कारव्यञ्जनं भवति, तत्र अलङ्काररूपशब्दशक्त्युत्थः क्रमेणोदाहरणं—

यथा—पंन्थिअ [१] ण एत्थ सत्थरमत्थि मण पत्थरत्थले गामे।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु॥

अत्र यद्युपभोगसमर्थोऽस्ति तदा तिष्ठति वस्तु सत्थरादिशब्दशक्तिद्वारा व्यज्यते।

दुर्गालंघितविग्रहो मनसिज, संमीलयँस्तेजसा,
प्रोद्यद्राजकलो गृहीतगरिमा, विष्वग्वृतो भोगिभिः।
नक्षत्रेशकृतेक्षणो गिरिर्गुरौ, गाढां रुचिन्धारयन्
गामाक्रम्य विभूतिभूषिततनू, राजत्युमावल्लभ॥

१ पथिक [२] नात्र सस्तरमस्ति मनाक प्रस्तरस्थलग्रामे।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस॥

१ पार्वती, दुर्गः, २ देहः, युद्धम्, ३ नाशयन्, तिरस्कारयन्, ४ भोगशालिनः, सर्पाः, ५ क्षत्रेश्वरेषु अकृतदृष्टिः, चन्द्रकृतनयनः, ६ वाण्यां गुरुजने च, हिमालये, ७ वृषभं, पृथ्वीं, ८ भस्म, सम्पत, ९ शिवः, भानुदेवः,।

अत्रोमादेवीवल्लभभानुदेवराज्ञो वर्णनं प्रकरणगम्यम् द्वितीयार्थलभ्यपार्वतीपतिशिववर्णनमप्राकरणिकत्वादसमञ्जसं मा भूदिति स्थाणुभानुदेवयोरुपमानोपमेयभावः कल्प्यते तदत्र उमावल्लभ इव उमावल्लभो राजते इत्युपमालङ्कारो व्यङ्ग्यः ।

यत्रार्थशक्त्यैव व्यञ्जनं भवति-स ध्वनिरर्थशक्त्युत्थः, अर्थशक्तिः द्विनिष्ठा-वस्तुनि अलङ्कारे च । वस्त्वलङ्कारौ स्वतःसंभवि, कविप्रौढोक्तिसिद्ध, कविनिबद्धवक्तृप्रौढोक्तिसिद्ध, भेदेन त्रिविधौ तैर्व्यञ्जनमपि वस्त्वलङ्कारयोरेव भवतीति द्वादशविधोऽर्थशक्त्युत्थः तद्भेदक्रमो यथा—

१ स्वतःसंभविवस्तुव्यङ्ग्यवस्तु
२ ,, ,, ,, ,, अलङ्कारः ।
३ ,, ,, अलङ्कारव्यङ्ग्यवस्तु
४ ,, ,, ,, ,, अलङ्कारः ।
५ कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तु
६ ,, ,, ,, ,, ,, अलङ्कारः ।
७ ,, ,, ,, अलङ्कारव्यंग्यवस्तु
८ ,, ,, ,, ,, ,, अलङ्कारः ।
९ कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यंग्यवस्तु
१० ,, ,, ,, ,, ,, ,, ,, अलंकारः ।
११ ,, ,, ,, ,, ,, अलंकारव्यंग्यवस्तु
१२ ,, ,, ,, ,, ,, ,, ,, अलंकारः

क्रमेणोदाहरणं यथा—

१ स्वतःसंभवि-वस्तु-व्यङ्ग्य-वस्तु—

गुञ्जन्ति मंजु परितो, गत्वा धावन्ति संमुखम् ।
आवर्तन्ते विवर्तन्ते, सरसीषु मधुव्रताः ॥

अत्र मधुकरकृतमंजुगुञ्जनादिवस्तुभिः स्वतःसंभविभिरासन्नसरोरुहोद्भवध्वननद्वारा शरदागमनकालनैकट्यरूपं वस्तु व्यज्यते ।

२ स्वतःसंभविवस्तुव्यङ्ग्यालङ्कारः ।

मृद्वीका रसिता [1]सिता समशिता, स्फीतं निपीतं पयः
स्वैर्यातेन सुधाप्यधायि कतिधा, रम्भाधरः खण्डितः ।
तत्त्वं ब्रूहि मदीयजीव [2] भवता, भूयो भवे भ्राम्यता
वीरेत्यक्षरयोरयं मधुरिमो-द्गारः क्वचिल्लक्षितः ॥

अत्र स्वतःसंभविना बाह्यवस्तूपभोगरूपवस्तुना अनेकजन्मतपोध्यानादिप्राप्यभगवन्नाम्नोऽतिशयोक्तिरलङ्कारो व्यज्यते ।

३ स्वतःसंभवि-अलङ्कारव्यङ्ग्यवस्तु ।

नदन्ति मदैदन्तिनः परिलसन्ति वाजिव्रजाः
पठन्ति बिरुदावलीमहितमन्दिरे बन्दिनः ।
इदं तदवधि प्रभो ! यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युतिः

१ शर्करा २ स्वर्गंगतेन ३ गजा ४ अश्वगणाः, ५ शत्रुगृहे ।

अत्र नयनकोणशोणद्युतेर्युगान्तदहनोपमया अरीणां संपत्तयो भस्मीभविष्यन्तीति वस्तु व्यज्यते ।

४ स्वतःसंभवि–अलङ्कारव्यंग्य–अलंकारः

उदितं मण्डलमिन्दोरुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलललना–चूडामणिशासनेन मदनेन ॥

अत्र समुच्चयालङ्कारेणातिशयोक्तिरलङ्कारो व्यज्यते ।

५ कविप्रौढोक्तिसिद्धवस्तुव्यंग्यवस्तु—

[1]सज्जेइ सुरहिमासो ण अप्पअइ जुअइजणलक्खसहे ।
अहिणअसहआरसुहे णअपल्लवपत्तले अणंगस्स सरे ॥

अत्र वसन्त इषुकारः, अनङ्गो धानुष्कः, लक्ष्यं ललनाः, कुसुमानीषवः । इत्यादीनि वस्तूनि कविप्रौढोक्तिसिद्धानि । तैः प्रकाशीभवत्कामक्रीडनरूपं वस्तु व्यज्यते ।

६ कविप्रौढोक्तिसिद्धवस्तुव्यंग्यालङ्कारः ।

रजनीषु विमलभानोः, करजालेन प्रकाशितं वीर [१] ।
धवलयति भुवनमण्डलमखिलं तव कीर्तिसन्ततिः सततम् ॥

अत्र कविप्रौढोक्तिसिद्धवस्तुना शशिकलाजालादधिककालप्रकाशित्वं कीर्तिकलापस्येति व्यतिरेकालङ्कारो व्यज्यते ।

१ सजयति सुरभिमासो न चार्पयति युवतिजनलक्ष्यशते ।
अभिनवसहकारमुखान् नवपल्लवपत्तलान् अनंगस्य शरान् ॥

७ कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यवस्तु—

देवाः के पूर्वदेवाः समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत्प्रतिभटपृतनावर्तिनः क्षत्रवीराः ।
यावन्नायाति राजन् ! नयनविषयतामन्तकत्रासिमूर्त्ते !
मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजङ्गः ॥

**अत्र कविप्रौढोक्तिसिद्धेन रूपकालंकारेण त्वय्युद्यतकृपाणे सति परेषां का जीवनस्याशेति वस्तु व्यज्यते ।**

८ कविप्रौढोक्तिसिद्धालङ्कारव्यंग्यालङ्कारः—

दयिते ! रदनत्विषां मिषादयि तेऽमी विलसन्ति केसराः ।
अपि [1]चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥

**अत्र पूर्वोत्तरार्धवर्तिनीभ्यामपह्नुतिभ्यां न त्वं नारी किन्तु नलिनीति तृतीयापह्नुतिर्व्यज्यते ।**

९ कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यंग्यवस्तु

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥

**इह कविनिबद्धस्य कामिनः प्रौढोक्तिसिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु व्यज्यते ।**

---

१ केशाः ।

१० कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यग्यालङ्कारः ।

सुभगे ! कोटिसंख्यत्व-मुपेत्य मदनाशुगैः ।
वसन्ते [1]पञ्चता त्यक्ता पञ्चतासीद् वियोगिनाम् ॥

इह कामशराणां कोटिसंख्यत्वमुपेतत्वेन सकलविरहिजनमरणरूप-कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुना शराणां पञ्चत्वं तान् विहाय वियोगिनं गतं किमित्युत्प्रेक्षालङ्कारः प्रतीयते ।

११ कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यंग्यवस्तु—

मल्लिकामुकुले चण्डि [2] भाति गुञ्जन् मधुव्रतः ।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनोत्प्रेक्षालंङ्कारेण मदनस्याय-मुन्मादकः कालः समागतः तत्कथं मानिनि ! मानं न मुञ्चसीति वस्तु व्यज्यते ।

१२ कविनिबद्धवक्तृप्रौढोक्तिसिद्धलङ्कारव्यंग्यालङ्कारः—

[3]महिलासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तुणुअं वि तणुएइ ॥

---

१ पञ्चसङ्ख्यत्वम् । २ मरणम् ।

३ छाया—महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धहेत्वलङ्कारेण तनोस्तनूकरणेऽपि सा तव हृदये न वर्तते इति विशेषोक्तिरलङ्कारो ध्वन्यते ।

॥ इति द्वादशभेदा अर्थशक्त्युत्थस्य ॥

शब्दार्थोभयशक्त्युत्थस्तु एक एव—

यथा—अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥

अत्र चन्द्रादिशब्दाः परिवृत्त्यसहिष्णव इति शब्दमालंब्य, अतन्द्राभरणादिशब्दा अनिद्रभूषणादिपर्यायान्तरैरपि तदर्थप्रतीतेः परिवृत्तिसहा इत्यर्थमाश्रित्य, श्यामा रात्रिरिव श्यामा कामिनीति उपमा व्यंग्येत्युभयशक्त्युत्थः ।

एवं ध्वनिकाव्यस्य भेदा अष्टादश । एते सर्वेऽपि भेदाः पद-पदांशवाक्यप्रबन्धादिगतत्वेन गणनातीता भवन्तीति विस्तरभयान्नेह प्रपञ्च्यन्ते विशेषार्थिनाकरे द्रष्टव्यम् ।

इति श्री सार्वीयसार्वसरस्वतीसुधासेकसिञ्चितसमस्तसंसारसर्वज्ञशासनसार्वजनीन-
सार्वभौमाचार्यश्रीमद्विजयनेमिसूरीश्वर–पट्टाम्बराम्बरमणि–व्याख्यानपीयूष-
परिवर्षणप्रावृट्पयोद–कविरत्न–शास्त्रविशारदाचार्यश्रीविजयामृतसूरीश्वर-
विनयनिधानविनेयरत्नमुनिवर्यश्रीपुण्यविजयपादपद्मपरागास्वाद-
लोलुपमधुकरमुनिधुरधरविजयसंदृब्धायां
साहित्यशिक्षामञ्जर्यां
तृतीया प्रमितिः ॥



## ॥ अथ चतुर्थी प्रमिति ॥

"गुणदोषादयश्च के" इति जिज्ञासायां गुणदोषादयो निरूप्यन्ते–तत्र आदिपदात् रीत्यलंकारौ विज्ञेयौ । अत्र काव्यस्य—शब्दार्थौ शरीरम्–आत्मा रसः शौर्यादिवद्गुणाः, काणत्वादिसदृशा दोषाः, संस्थानसमा रीतिः, आभूषणतुल्या अलंकाराः ज्ञेयाः ।

गुणरीत्यलंकाराणां सामान्यलक्षणन्तु रसोत्कर्षकारकत्वम् ।

### –: गुणनिरूपणम् :–

माधुर्यमोजः प्रसाद इति त्रयो गुणाः । तत्र काठिन्यादिपरित्यागपूर्वकानन्दोद्बोधेन सहृदयार्द्रताजनकत्वम् माधुर्यम् (१) तत् शृङ्गारे करुणे शान्ते च क्रमादतिशयमावहति । माधुर्य–व्यंजकाः–अग्रे वर्गान्त्यवर्णयुक्ता वर्णाः, ट ठ ड ढ वर्जिताः, ह्रस्वस्वरयुक्तौ रेफणकारौ, अल्पसमासाः, ललितमृदुरचनादयः, ।

शृंगारे माधुर्यं यथा—लता कुञ्जं गुञ्जन् १मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥ १ ॥

१ मदमत्तमधुकरसंघातम् ।

करुणे यथा—गृहिणीसचिवः सखा मिथः प्रियशिक्षाललिते कलाविधौ
करुणाविमुखेन मृत्युना हरता त्वं वद किं न मे हृतम् ॥ १ ॥

शान्ते यथा—यैः शान्तरागरुचिभिः परमाणुभिस्त्वं
निर्मापितस्त्रिभुवनैकललामभूत २ ।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां
यत्ते समानमपरं नहि रूपमस्ति ॥

माधुर्याभावो यथा—अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि ! माम् ।
कम्बुकण्ठयाः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥

अत्र माधुर्यप्रतिकूल-टवर्गीयवर्णाभिसम्बन्धान्न माधुर्यम् ।

२ चित्तोत्साहपूर्वकदीप्तिजनकं, ओजः ।

एतद् वीररसे बीभत्से ततश्च रौद्ररसेऽतिशयित्वमाप्नोति। वर्गाणां प्रथम-तृतीय-वर्णैः सह द्वितीय-चतुर्थ-वर्णानां रेफणकारयोः सम-वर्णस्य च योगेन, टवर्गशकारबाहुल्येन, दीर्घसमासेन, उद्धतरचनया चाभिव्यज्यते ओजः ।

यथा—वीरे—मूर्ध्नामुद्‌वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा
धौतेशांघ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
१दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयास ॥

१ हस्तानाम् ।

**बीभत्से–उत्कृत्योत्कृत्तिमित्यादि—**

**रौद्ररसे**—चञ्चद्भुजभ्रमितचण्डगदाभिघात–
संचूर्णितोरुयुगलस्य सुयोधनस्य ॥
स्त्यानावनद्धघनशोणितशोणपाणि–
रुत्तंसयिष्यति कचांस्तवदेवि[१] भीमः ॥ १ ॥

**न पुनरेवं यथा**—देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिता
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति नो
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः[२] क्रोधनः ॥ १ ॥

**अत्र ओजसोऽनुकूलवर्णरचनासमासानां अभावेन न ओजः ।**

**३ वस्त्रे यथा विमलवारि, शुष्केन्धने यथा वह्निः, तथा चेतसि योऽविलम्बेन प्रसरति स प्रसादः ।**

**श्रवणमात्रेणार्थबोधजनकैर्वर्णरचनासमासैरयं व्यज्यते । रसमात्रसाधारणोऽयं गुणः ।**

**यथा**—दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः
सन्तश्चेदमृतेन किं यदि खलास्तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥

१ केशान् । २ अश्वत्थामा ।

**केचित्तु**—श्लेषः प्रसादः समता, माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्व—मोजः कान्ति समाधयः ॥
इति वैदर्भमार्गस्य प्राणा दशगुणा मताः ।

इति दशगुणान्मन्यन्ते तथापि तेषामुपरोक्तगुणत्रयेऽन्तर्भावाभातिरिक्तत्वम् । तद्यथा—माधुर्ये-कान्तिः सौकुमार्यं च, ओजसि श्लेषः समाधिरुदारता च । प्रसादेऽर्थव्यक्तिः समता च ।

**यदुक्तम्**—माधुर्यमोजः प्रसादाख्यास्त्रयस्ते न पुनर्दश ।
केचिदन्तर्भवन्त्येषु दोषत्यागात् परे स्थिता ॥

॥ इति गुणनिरूपणम् ॥



## —:: दोष निरूपणम् ::—

रसापकर्षहेतवो दोषाः। ते च त्रिधा शब्ददोषार्थदोषरसदोषभेदात्।

तत्र शब्ददोषाः निरर्थक, निर्लक्षणाश्लील-श्रुतिकटु-नेयार्थ-ग्राम्य-संदिग्धा-वाचकादयः—

प्रकृते यच्छब्दस्यानुपयोगित्वम्=तन्निरर्थकम्—

यथा—उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि[१]।
अभिवाञ्छितं प्रसिध्यतु भगवति[२] युष्मत्प्रसादेन ॥

अत्र "हि" शब्दो अनुपयोगी।

व्याकरणशास्त्रादिलक्षणरहितम्-निर्लक्षणम्—

यथा—दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥

अत्र "पाण्ड्या" इति न संभवति बहुवचने तद्धितप्रत्ययलोपात् इति व्याकरणदूषितम्।

मनोवैकल्यजनकं-अश्लीलम्—

यथा—मनीषिता[१] सन्ति गृहेऽपि देवतास्तपः क्व वत्से[२] च तावकं वपुः।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥

१ विकसित। २ अतिशयितकोमलम्।

**अत्र "पेलव" शब्दो अश्लीलः ॥**

**परुषवर्ण–श्रुतिकटु—**

**यथा**—उत्खातप्रखरा सुखासुखसखी खड्गा सिता खेलगा
वैशृङ्खल्यखलीकृताखिलखला खे(खा)त्खेटकैः ख्यापिताः ।
खेटादुत्खनितुं निखर्वमनसां मौर्ख्यं मुखात्खक्खटं
निःसंख्यान्यनिखर्वसर्वमणिभूराख्यातु संख्यानि वः ॥

**यत्र परम्परयाऽर्थो ज्ञायते, तन्नेयार्थम्—**

**यथा**–नवकुमुदवनश्रीहासकेलिप्रसङ्गा–दधिकरुचिरशेषामप्युषां[1] जागरित्वा ।
अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुर्म्लानमात्मानमिन्दुः ॥

**अत्र हस्त शब्दः करं बोधयति तेन च किरणाः लक्ष्यन्ते इति नेयार्थम् ।**

**अविदुषो वचनम्—ग्राम्यम्**

**यथा**—ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानवः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ १ ॥

**अत्र गल्लभल्लादिशब्दा ग्राम्याः**

**अर्थद्वय प्रतिभासनेन संशयजनकं—सन्दिग्धम्**

**यथा**—आलिङ्गितस्तत्रभवान् संपराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

१ प्रातर् ।

अत्र वबयोरैक्यात् वन्द्यां, वन्दनीयां वा इति अर्थद्वयप्रतिभासः अतः संदिग्धम्—

अभिमतार्थप्रतिपादनासमर्थम्–अवाचकम्

यथा—उद्गर्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धत
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः[1] ।
उच्चैरुच्चरतिध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमागच्छति ॥ १ ॥

अत्र ध्वनिशब्दो गीतप्रमुखध्वनिषु प्रसिद्धः समुद्रे तु गर्जितमेव अतोध्वनिशब्दो समुद्रजशब्देऽशक्तः इति तदर्थबोधेऽसमर्थः

इति शब्ददोषाः

अर्थदोषाः कष्टापुष्टव्याहत–ग्राम्य–पुनरुक्त–निर्हेतुक–प्रमुखाः ।

दुरवबोधः कष्टः—

यथा—सदा मध्ये यासाममृतरसनिष्पन्दसरसं
सरस्वत्युद्दामा[2] वहति बहुमायां परिमलम् ।
प्रसादं ता एता घनपरिचया केन महतां
महाकाव्यव्योम्नि स्फुरितरुचिरायां तु रुचयः ॥ १ ॥

१ प्रतिशब्दजनिका. । २ उच्छलद् ।

यासां कविरुचीनां प्रतिभास्वरूपाणां-प्रभाणां मध्ये बहुमार्गा सुकुमारविचित्रमध्यमात्मकत्रिमार्गा सरस्वती भारती परिमलं चमत्कारं वहति-ताः कविरुचयो महाकाव्यव्योम्नि सर्गबन्धलक्षणे परिचयमागताः इत्यर्थः ।

प्रकृतानुपयोगी-अपुष्टः

यथा—अनणुरणन् मणिमेखलमविरतसिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥

अत्र वर्णसावर्ण्यमात्रम् ।

यत्र पूर्वापरविरोधः तत्र-व्याहतत्वम्—

यथा—जहि शत्रुकुलं कृत्स्नं जय विश्वंभरामिमाम् ।
न च ते कोऽपिविद्वेष्टा सर्वभूतानुकम्पिनः ॥ १ ॥

अत्र पूर्वार्धे शत्रुकुलं जहि, उत्तरार्धे तु ते न कोऽपि विद्वेष्टा इति परस्परविरोधः अतो व्याहतत्वम् ।

अविदग्धोचितम्-ग्राम्यम्—

यथा—स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैतिते ।
तदयि[2] सांप्रतमाहरकूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥

१ अखिलम् । २ हस्तमध्यवर्तीअवयव. ।

अत्र नायकोऽविदग्धः

अधिगतेऽर्थे पुनरभिधानं–पुनरुक्तम्—

यथा—तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दु–रिन्दु· क्षीरनिधाविव ॥ १ ॥

अत्र इन्दुरिति पुनरुक्तम् तदर्थस्य राजेन्दुरित्यत्रावगतत्वात्

हेत्वभाववत्–निर्हेतुकम्—

यथा—गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाधस्याभूल खलु तव कश्चिन्न विषय ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्
विमोक्षे शस्त्र ! त्वामहमपि यत स्वस्ति भवते ॥ १ ॥

अत्र द्वितीयशस्त्रपरित्यागे हेतुर्नोपात्तः ॥

इत्यर्थदोषाः

रसदोषाः १ रसस्थायिभावादीनां स्वशब्दोक्तिः । २ विभावानुभावयोः कष्टेन प्रतीतिः । ३ वर्णनीयरसविरुद्धविभावादि परिग्रहः । ४ पुनः पुनः उद्दीपनं रसादेः । ५ अनवसरे रसस्य विस्तारः । ६ अकाण्डे रसस्य छेदः । ७ प्रकृतीनां विपर्ययः ॥ इत्यादयः

**क्रमेण यथा**—शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया ॥
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसात्मकः पशुपतिर्भूयात्सतां भूतये ॥ १ ॥

**अत्र रसस्य शृङ्गारादेः स्वशब्दोक्तिः ॥**

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
[1]छणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥

**अत्र स्थायिभावस्य स्वशब्दोक्तिः**

(२) परिहरति रतिं मतिं लुनीते स्खलति भृशं परिवर्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥

**अत्र रति-परिहारादीनां करुणादावपि संभवात् कष्टावसेयः कामिनीरूपो विभावः ।**

(३) प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये ? शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे ? प्रत्येतुं प्रभवति गतः कालहरिणः ॥ १ ॥

**अत्र शृङ्गारप्रतिकूलस्य शान्तरसस्य निर्वेदस्योपनिबन्धनम् ।**

---

१ शब्दविशेषैः ।

(४) पुनपुनरुद्दीपनम्–कुमारसंभवे चतुर्थे सर्गे–रतिविलापे।

(५) अनवसरे रसस्य विस्तारो वेणीसंहारे द्वितीयेऽङ्के भीष्माद्यनके-वीरक्षये करुणवीररसादेरेव प्रसङ्गः शृङ्गारस्तु सर्वथानुचितः तथापि भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् इति दोषः

(६) अकाण्डे रसस्य छेदः वीरचरिते द्वितीयेऽङ्के राम–परशुरामयोः वीररसे प्रवृत्ते कङ्कणमोचनाय गच्छामि, इति श्रीरामस्योक्तिः

(७) त्रिविधा प्रकृतयः दिव्या–अदिव्या–दिव्यादिव्याश्च। देव-गन्धर्वादयः दिव्याः, नरादयः अदिव्याः, ये दिव्या अपि आत्मनि नराभिमानिनस्ते दिव्यादिव्याः यथा–रामचन्द्रादयः तेषां यत्प्रतिकूलवर्णनम् तत् प्रकृतिविपर्ययः यथा–धीरोदात्त-प्रकृतेः रामस्य धीरोद्धतवच्छद्मना वालिवधः। तथा च मातृ–पित्रोः संभोगवर्णनवद् भगवतोः संभोगवर्णनमनुचितम्, तथापि कुमारसंभवे पार्वतीशङ्करयोस्तद्वर्णनम् इति दोषः॥

एते दोषास्थलविशेषे यथायथं दोषत्वं त्यजन्ति, अनुकरणे, विदूषकोक्तौ, व्यभिचारस्य स्वशब्देन कीर्त्तने, मुखाद्याकारविशेषे एवं अन्यत्राऽपि।

क्वचिद्दोषोऽपि गुणः।

क्रोधयुक्ते वक्तरि रौद्ररसे च दुःश्रवत्वं गुणः। वैयाकरणवक्तरि कष्टत्वं दुःश्रवत्वं वा गुणः।

अधमोक्तिषु ग्राम्यत्वं गुणः तथाऽन्यत्रापिज्ञेयम् ।

॥ इति दोषनिरूपणम् ॥

## रीति निरूपणम्

शरीरिणोऽवयवसन्निवेश इव रसोपकर्त्री सुप्तिङात्मकपद-संयोजनात्मिका............रीतिः ।

सा वैदर्भी, गौडी, पाञ्चाली, लाटी, भेदेन चतुर्विधा ।

(१) तत्र माधुर्यगुणव्यञ्जिका, मनोहारिणी, कोमलबन्धान्विता, समासरहिता अल्पसमासा वा—वैदर्भीरीतिः ।

यथा—अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां १स्कन्दस्य मातुः पयसां रसज्ञः ॥

(२)ओजो गुणानुरञ्जिका सघनसमासा उद्धतबन्धबन्धुरा-गौडीरीतिः

यथा—दंष्ट्रालः स्फुटकुन्दकुड्मलशतैर्जिह्वाल उल्लासिभि
किंकिल्लिद्रुमपल्लवैः शितमुखैः प्रेङ्खन्नखः किंशुकैः ।
वल्लीजालविशालबालधिरसावत्रोज्जयन्ताचलो
बन्धूकोद्धतलोचनः प्रकुरुते शार्दूलविक्रीडितम् ॥ १ ॥

१ कार्त्तिकेयस्य ।

(३) प्रसादगुणाभिव्यञ्जिका सुश्लिष्टा, मधुरा, सुकुमारा पाञ्चाली रीतिः ।

**यथा**—मधुरया मधुबोधितमाधवी–मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद–ध्वनिभृता निभृताक्षरमुज्जगे ॥ १ ॥

वैदर्भीपाञ्चाल्योर्मध्यवर्तिनी लघुसमाससंवलिता कलिता लाटीरीतिः ।

**यथा**—अयमुदयति मुद्राभञ्जनः पद्मिनीना–
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥ १ ॥

अन्येत्वाहुः ।

गौडी डम्बरबद्धा स्यात् वैदर्भी ललितक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥

## इति रीतिः

## अथ अलङ्कार निरूपणम्

रसपोषकाः शरीरस्य कनककुण्डलादय इव काव्यस्य शोभा विधायिका अलङ्काराः ते च शब्दार्थ गतत्वेन द्विविधाः ।

सूर्यः ।

तत्र शब्दपरिवृत्त्यसहाः शब्दालङ्काराः ते च पुनरुक्त–वदाभास, अनुप्रास, यमक, वक्रोक्तिः, भाषासम, श्लेषभेदेन षड्विधाः ॥

(१) यत्र श्रवणमात्रतः पर्यायशब्दैः अर्थस्य पौनरुक्त्यावभासनं तत्र–पुनरुक्तवदाभासोऽलङ्कारः ॥

यथा—स त्वं सम्यक् समुन्मील्य हृदि भासि विराजसे ।
द्विषामरीणां त्वं सेनां वाहिनीमुदकम्पयः ॥ १ ॥

(२) स्वरवैपरीत्येऽपि शब्दस्य साम्यम्–अनुप्रासः ॥

अत्र शब्दस्य विर्णपदैकदेशपादानां अन्यतमस्येत्यर्थः, स च छेकानुप्रासः, वृत्त्यनुप्रासः, अन्त्यानुप्रासः लाटानुप्रासः इति चतुर्धा

यत्र वर्णानामेकवारमावृत्तिः तत्र–छेकानुप्रासः

यथा—निरानन्दः [1]कौन्दे मधुनि विधुरो बालवकुले
न साले सालम्बो लवमपि लवङ्गे न रमते ।
प्रियङ्गोर्नो सङ्गं रचयति न चूते विचरति
समर्ँल्लक्ष्मीलीलाकमलमधुपानं मधुकर ॥ १ ॥

यत्र वर्णानामनेकवारमावृत्तिः तत्र–वृत्त्यनुप्रासः ॥

यथा—उत्कूजन्तु वटे वटे बतबकाः काका वराकाऽपि ।
क्रांकुर्वन्तु सदा निनादपटवस्ते पिप्पले पिप्पले ॥

१ कुन्दपुष्पे । २ पुष्पविशेषस्य ।

सोऽन्यः कोऽपि रसालपल्लवनवग्रासोल्लसत्पाटवः ।
क्रीडत्कोकिलकण्ठकूजनकला–लीलाविलासक्रमः ॥ १ ॥

**यत्र–यथासंभवमनुस्वारविसर्गस्वरयुक्ताक्षरविशिष्टम् व्यञ्जनं पदान्ते पादान्ते वा आवर्त्यते तत्र–अन्त्यानुप्रासः—**

**यथा—**केश· काशस्तवकविकाश· काय· प्रकटितकरभविलास· ॥
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥ १ ॥

**यत्र तात्पर्यमात्रतः भेदे सति शब्दार्थयोः पौनरुक्त्यं तत्र लाटानुप्रासः ।**

**यथा—**स्मेरराजीवनयने ! नयने किं निमीलिते ।
पश्य निर्जितकन्दर्पे ! कन्दर्पवशगं पतिम् ॥ १ ॥

**(३) भिन्नार्थस्य स्वरव्यञ्जनसङ्घस्य यथैकधा समुच्चारणं तथैव पुनरुच्चारणं–यमकालङ्कारः ॥ स च श्लोक–श्लोकार्ध–पाद–पादांशभेदेनानेकधा–तत्र श्लोकयमकं महायमकं कथ्यते ।**

**यमकोदाहरणं यथा—**भव्याम्भोजविबोधनैकतरणि–र्विस्तारिकर्मावली–
रम्भासामजनाभिनन्दनमहानष्टापदाभासुरै· ।
भक्त्या वंदितपादपद्मविदुषां सम्पादयप्रोज्झिता–
रम्भासामजनाभिनन्दनमहानष्टापदाभासुरै· ॥ १ ॥

**(४) अन्यदीयान्यार्थकं वाक्यमादाय यदि कश्चित् काक्वा श्लेषेण वाऽन्यार्थं योजयेत् सा–वक्रोक्तिः—**

**यथा**—सद्धाः प्रेयसि ? दीयतां प्रियतम ? द्वारं किम(मु)च्छाद्यते
सत्कं सुन्दरि ? याचितं कथय मे किं कस्य सत्कं प्रिय ? ।
श्रीनाभेयजिनस्य मज्जनजलं कस्त्वं जनः किं जलं
दम्पत्योरिति जल्पितं जिनपतेः स्नानोत्सवे पातु वः ॥ १ ॥

**विज्ञप्तित्रिवेण्यां यथा**–कुन्थुं कान्त ! नमस्कुरु, प्रियतमे ! कः क्षुद्रजन्तुं नमेत्
भर्त्तः ! श्रीतनयं वदामि, मदनः किं ? नैष सूरात्मजः ।
किं मन्दोऽयमयि प्रभो ! नहि जगत्प्रद्योयकस्तीर्थकृत्
दम्पत्योरिति वक्रवाक्यविषयः पुष्यात्सुखान्येष वः ॥

**(५) अनेक विधास्वपि भाषासु एकविधैरेव वाक्यैर्यत्र रचना भवति तत्र–भाषासमालङ्कारः ॥**

**यथा**—संसार–दावानल–दाह–नीरं, संमोह–धूली–हरणे समीरम् ।
माया–रसा–दारण–सार–सीरं, नमामि वीरं गिरि-सार-धीरम् ॥१॥

**अत्र संस्कृतप्राकृतयोः समानता**

**यथा च**—वाग्भट–विरचित–काव्यानुशासने
आलोलकमले चित्ते ललामकमलालये ।
पाहि चण्डि ? महामोहभङ्गभीमबलामले ॥ १ ॥

अत्र संस्कृत, प्राकृत, मागधी, पैशाचिकी, सौरसेनी, अप-भ्रंशा, इति षण्णां भाषाणां योगः ॥

(३) अनेकार्थपर्यवसितैरेकविधैरेव शब्दैरनेकार्थोऽभिधाने–श्लेषालङ्कारः। स च सभङ्गः, अभङ्गः, उभयात्मकश्चेति त्रिधा ॥

**सभङ्गो यथा**—पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ?।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥

**अभङ्गो यथा**—किं तत्रास्ति निरन्तरं न भवतः सङ्गः कुरङ्गीदृशां
किं वा तत्र तथा पयोधरपरिष्वङ्गोऽपि नाह्लादकः।
यन्मामत्र विहाय निर्वृतिमना नाथोज्जयन्तं गतः
पायाद्वोऽभिहितः स भोजसुतया देवः शिवानन्दनः ॥

**अथवा**—केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्।
किं पुनः क्लृप्तसंधानः पुलिन्ध्रकृतसन्निधिः ॥

**उभयात्मको यथा**—माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे
स्मरन्ति भारवेरेव कवयः कपयो यथा ॥

**यद्वा**—अङ्कितान्यक्षसंघातैः सरोगाणि सदैव हि।
शरीरिणा शरीराणि कमलानि न संशयः ॥

**॥ इति शब्दालङ्काराः ॥**



## ॥ अथ अर्थालङ्काराः ॥



तत्रातिप्रसिद्धत्वात् प्रथमं उपमालङ्कारः ॥

१ उपमानोपमेययोर्हृद्यं साधर्म्य-मुपमा। सा च पूर्णोपमा प्रतीयमानोपमेति द्विधा। यत्रोपमानमुपमेयं साधारणधर्मः सादृश्यं च उक्तानि स्युः तत्र पूर्णोपमा। एतेषामन्यतमस्यानुक्ते प्रतीयमानोपमा।

पूर्णा यथा—गत्या विभ्रममन्दया प्रतिपदं या राजहंसायते
यस्याः पूर्णमृगाङ्कमण्डलमिव श्रीमत्सदैवाननम्।
यस्याश्चानुकरोति नेत्रयुगलं नीलोत्पलानि श्रिया
तां कुन्दार्हदतीं त्यजञ्जिनपती राजीमतीं पातु वः॥

प्रतीयमाना यथा—अनाधिव्याधिसंबाध-ममन्दानन्दकारणम्।
न किञ्चिदन्यदस्तीह समाधेः सदृशं सखे ? ॥

२ यत्र पूर्वपूर्वोपमेयस्य उत्तरोत्तरमुपमानता तत्र-रसनोपमा।

यथा—चन्द्रायते शुक्लरुचाऽपि हंसो हंसायते चारुगतेन कान्ता।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः॥

३ एकस्यैव वस्तुनो यदोपमानत्वमुपमेयत्वं च तदाऽनन्वयालङ्कारः

**यथा**—राजीवमिव राजीवं जलं जलमिवाऽजनि ।
चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे ॥

**४ यत्र क्रमेण द्वयोरुपमानोपमेयत्वं तत्र उपमेयोपमालङ्कारः ।**

**यथा**—गिरिरिव गजराजोऽयं गजराज इवोच्चैर्विभाति गिरिः ।
निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति ॥

**५ यत्रोपमेये उपमानस्य "अभेदाध्यवसायः" तत्र–रूपकालङ्कारः ।**

**यथा**—संसार एष कूपः सलिलानि विपत्तिजन्मदुःखानि ।
इह धर्म एव रज्जुस्तस्मादुद्धरति निर्मग्नान् ॥

**६-७-८ सादृश्यज्ञानतो यत्र स्मृति-भ्रान्ति-संदेहाः संजायन्ते तत्र क्रमेण स्मृति-भ्रान्ति-संदेहालङ्काराः**

**स्मृत्यलङ्कारो यथा**—पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ।

**भ्रान्त्यलङ्कारो यथा**—पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जंबुफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥

**संदेहालङ्कारो यथा**—जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः ।
किं कनिष्ठाः किमुज्येष्ठा घटी यन्त्रस्य दुर्जना ॥

**९ वर्णनीयवस्तुधर्मनिन्हवपूर्वकतत्सदृशधर्मारोपः–शुद्धापह्नुतिः ।**

**यथा**—नायं सुधांशुः किं तर्हि व्योमगंगासरोरुहम् ।

**यद्वा**—अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे ।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥

**१० अत्यन्तसादृश्यादसतोऽपि धर्मस्य कल्पन-मुत्प्रेक्षा । सा च एवं मन्ये शङ्के ध्रुवं नूनमित्यादिभिः शब्दैर्व्यज्यते**

**यथा**—दिशतु विरतिलाभानन्तरं पार्श्वसर्प-
न्नमिविनमिकृपाणोत्सङ्गदृश्याङ्गलक्ष्मीः ।
त्रिजगदपगतापत् कर्तुमात्तान्यरूप-
द्वय इव भगवान् वः संपदं नाभिसूनुः ॥

**प्रतीयमानोत्प्रेक्षा यथा**—बलं जगद्ध्वंसनरक्षणक्षमं
क्षमा च किं संगमके कृतागसि ।
इतीव संचिन्त्य विमुच्य मानसं
रुषेव रोषस्तव नाथ ? निर्ययौ ॥

**११ अत्युक्तिर-तिशयोक्तिरलङ्कारः ।**

**यथा**—सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यं मण्डलं च महीक्षिताम् ॥

**१२ यत्रोपमानोपमेययोर्भिन्नौ धर्मौ बिम्बप्रतिबिम्बभावेन वर्णितौ तत्र-दृष्टान्तालङ्कारः**

यथा—अविदितगुणाऽपि सत्कविभणिति कर्णेषु वमति मधुधारां।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला॥

**१३ यत्र सदृशयोः वाक्यार्थयोः ऐक्यारोपस्तत्र–निदर्शनालङ्कारः।**

यथा—अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूपरे वर्षितम्।
श्वपुच्छमवनामितं बधिरकर्णजाप कृतो
धृतोऽन्धमुखदर्पणो यदवुधो जन॰ सेवितः॥

**१४ उपमानादुपमेयस्याधिक्यं न्यूनता वा यत्र वर्ण्यते तत्र व्यतिरेकालङ्कारः।**

यथा—शैला इवोन्नता सन्त किन्तु प्रकृतिकोमला॰॥

**१५ यत्र येन विना वर्णनीयवस्तुनि न्यूनता, आधिक्यं वा स्यात् तत्र–विनोक्त्यलङ्कारः।**

यथा—विद्या हृद्याऽपि सावद्या विना विनयसंपदं।
विना खलैर्विभात्येषा राजेन्द्र ! भवत॰ सभा॥

**१६ स्वभावतः एकार्थके वाक्ये अनेकार्थता–श्लेषः।**

यथा—प्रवर्तयन् क्रिया साध्वीर्मालिन्यं हरितां हरन्।
महसा भूयसा दीप्तौ विराजति विभाकर॰॥

**१७ यत्र अप्रस्ततवर्णनेन प्रस्तुतं ज्ञायते तत्राप्रस्तुतप्रशंसा।**

**यथा**—पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्था देवापमानेऽपि देहिनस्तद्वरं रजः ॥

**१८ यत्र निन्दास्तुतिभ्यां स्तुतिनिन्दे गम्येते तत्र–व्याजस्तुतिरलङ्कारः**

**यथा**—सर्वदा सर्वदोऽसीति मिथ्या त्वं स्तूयसे बुधैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥

**यथा वा**—किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा देव ? कीर्तिः ॥

**स्तुत्या निन्दा यथा**—कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥

**१९ यत्र सामान्यं विशेषेण विशेषश्च सामान्येन समर्थ्यते–तत्रार्थान्तरन्यासालङ्कारः**

**यथा**—विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्वे भवति महतां नोपकरणे ॥

अत्र सामान्यं विशेषेण समर्थितं।

सामान्येन विशेषसमर्थनं यथा—

गुणवद्वस्तुसंसर्गाद्, याति नीचोऽपि गौरवम् ।
पुष्पमालानुसंगेन सूत्रं शिरसि धार्यते ॥

२० यत्र हेतुं विना कार्योत्पत्तिर्वर्ण्यते तत्र विभावनालङ्कारः ।

यथा—चक्रिनिर्जितशत्रूणा-मुत्पेदेऽरात्रिकं तमः ॥

अत्रान्धकारोत्पत्ती रात्रावेव तथापि तस्योत्पत्ती रजनीं विना वर्णिता-इति विभावना ॥

२१ यत्र कारणसत्त्वेऽपि कार्याभावस्तत्र-विशेषोक्तिः ।

यथा—धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिन ॥

२२ यत्र आपाततः विरोधं प्रतिभासते तत्र-विरोधाभासः ।

यथा—विश्वेश्वरोऽपि जनपालक ! दुर्गतस्त्वं
किं चाक्षरप्रकृतिरप्यलिपीस्त्वमीश ! ।
अज्ञानवत्यपि सदैव कथंचिदेव
ज्ञानं त्वयि स्फुरति विश्वविकाशहेतो: ॥

२३ यत्र असंभावितस्यार्थस्य संबंधः क्रियते स-विषमालंकारः

**यथा**—क्वचायं भूभागः क्व च गगनमेतद्व्यवहितं
तथाप्यम्भोराशिर्विकसति सितांशोः समुदये ।
वृथा प्रत्यासत्तिः किमु किमपि मृग्यं तदपरं
यदत्यन्तं भावान्घटयति विदूरानपि मिथः ॥

**२४ यत्र योग्यकर्मणा योग्यस्य वस्तुनः प्रशंसा स्यात्तत्र-समालङ्कारः।**

**यथा**—येषां विकचारविन्दराज्या ज्यायः क्रमकमलावलिं दधत्या ।
सदृशैरिति संगतं प्रशस्यं कथितं संतु शिवाय ते जिनेन्द्राः ॥

**२५ इष्टविरुद्धस्य करणं यदि इष्टफलाय जायते तदा-विचित्रालंकृतिः।**

**यथा**—प्रणमत्युन्नतिहेतो–र्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥

**२६ परं परं प्रति यदि पूर्वपूर्वस्य कारणता तदा–कारणमाला**

**यथा**—श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् ।
लोकानुरागो विनयान्न किं लोकानुरागतः ॥

**२७ उत्तरोत्तरं एकधर्मेणानेकधर्मिणां संबंधो–मालादीपकम् ।**

संग्रामांगणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनाऽपि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

**२८ उत्तरोत्तरमुत्कर्षो वस्तुनः–सारालङ्कारः**

यथा—काव्येषु नाटकं रम्यं नाटकेषु शकुंतलं ।
तत्राऽपि चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ॥

**२९ प्रश्नादप्रश्नाद्वा तादृशस्यान्यस्य वस्तुनो निरासो भवेत्तदा—परिसंख्यालङ्कारः ।**

यथा—किं भूषणं सुद्रढमत्र यशो न रत्नं, किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं, जानाति कस्त्वदपरः सदसद्विवेकम् ॥

**३० यत्रोपमानस्य तिरस्कारः स—आक्षेपालंकारः ।**

यथा—अहमेव गुरुः सुदारुणानामिति हालाहल तात ! मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥

**३१ यत्र तत्तत्स्वभावमेव वर्णनं तत्र—स्वाभावोक्तिरलङ्कारः ।**

यथा—करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥

इत्यर्थालङ्काराः—

**अत्र साहित्ये येऽतिप्रसिद्धा अलंङ्कारास्तेऽत्र प्रायशः प्रकाशिताः—विशेषार्थिना काव्यानुशासनादयो विशिष्टग्रन्था अवलोकनीयाः—**

इति श्री सार्वीयसार्वसरस्वतीसुधासेकसिञ्चितसमस्तससारसर्वज्ञशासनसार्वजनीन-
सार्वभौमाचार्यश्रीमद्विजयनेमिसूरीश्वर–पट्टाम्बराम्बरमणि–व्याख्यानपीयूष-
परिवर्षणप्रावृट्पयोद–कविरत्न–शास्त्रविशारदाचार्यश्रीविजयामृतसूरी-
श्वरविनयविधानविनेयरत्नमुनिवर्यश्रीपुण्यविजयपादपद्म-
परागास्वादलोलुपमधुकरमुनिधुरधरविजयसंदृब्धाया
साहित्यशिक्षामञ्जर्यां चतुर्थी प्रमितिः ॥



## ॥ अथ पञ्चमा प्रमितिः ॥



अथ संप्रदायः कवेः कः? इति जिज्ञासायां कविसंप्रदाय—
वर्णनात्मिका पंचमा प्रमितिः ॥

अत्रेदं प्रथममवधारणीयम् यन्निरंकुशाः कवय इति वस्तु-वर्णने क्वचित् सतामप्यभावं वर्णयन्ति क्वचिदसतामपि भावं निबध्नन्ति इत्यादि बहुप्रकारा लोकनिरपेक्षा कविप्रवृत्तिर्वर्तते साऽत्र संक्षेपात्प्रदर्श्यते—

### १ सतां भावानामनिबन्धे

१ वसन्ते मालत्याऽभावो—

यथा—मालती विमुखश्चैत्रो विकासी पुष्पसंपदाम्।
आश्चर्यं जातिहीनस्य कथं सुमनस प्रियाः ॥

२ चन्दनद्रुमे पुष्पफलयोरभावो—

यथा—सा छाया स च सुन्दर परिमलस्ते कोमलाः पल्लवा
भ्रान्तश्चन्दनपादपस्य बहवः सन्त्येव किं तैर्गुणैः ॥
दृप्यद्दुष्टभुजङ्गसंगतिवशादापादमूलागतै-
रानीतं फलमन्यतोऽपि पथिकै साशङ्कमास्वाद्यते ॥

३ कृष्णपक्षे ज्योत्स्नायाः शुक्लपक्षे त्वन्धकारस्य अभावो-

यथा—परतो न तत्वचिन्ता तद्वन्त स्युर्मुखस्थगुणदोषैः ।
एको हि सितः पक्षः कौमुद्या तुल्ययाऽपि कृष्णोऽन्यः ॥

४ कुन्दकुड्मलानां कामिदन्तानां रक्तत्वस्याभावो

यथा— व्याकोशकुन्दकुड्मलविमलदर्ती यो विहाय राजिमतीम् ।
मुक्त्यङ्गनानुरक्तो बभूव नेमिः स वः पायात् ॥

५ दिवा नीलोत्पलादीनां विकासस्याभावो

यथा—कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ॥
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥

२ क्वचिदसतामपिभावानां निबन्धः
तद्यथा १ नदीषु नीलोत्पलादीनां

यथा—शस्तं पयः पपुरनेनिजुरम्बराणि
चक्षुर्विसंहतविकाशि बिसप्रसूनाः
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
मिथ्याप्रवादमसृजत्वननिम्नगानाम्

२ हंसानां जलाशयमात्रे निबन्धो

यथा—अस्मिन्नेव लतागृहे त्वमभवस्तून्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद् गोदावरीरोधसि ।

आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥

३ **यशोहास्ययोः शौक्ल्यस्य निबन्धो**

**यथा**—कर्पूरद्रुमगर्भधूलीधवलं यत्केतकानां त्विषः
श्वेतिम्ना परिभूय चन्द्रमहसा सार्धं प्रतिस्पर्धते ।,
तत्पाकोज्ज्वलनालिकेर सलिलच्छायावदातं यशः
प्रालेयाचलचूलिकासु भवतो गायन्ति सिद्धाङ्गनाः ॥

४ **अयशःपापयोः कार्ष्ण्यस्य निबन्धो**

**यथा**—प्रसरन्ति कीर्त्तयस्ते तव च रिपूणामकीर्तयो युगपत्
कुवलयदलसंवलिताः प्रतिदिशमिव मालतीमालाः ॥

५ **चक्रवाकानां निशि भिन्नतटाश्रयणस्य निबन्धो**

**यथा**—इह हि कुमुदकोशे पीतमम्भः सुशीतं
कवलितमिह नालं कन्दलं चेह दृष्टम् ।
इति रटति निशायां पर्यटन्ती तटान्ते
सहचरपरिमुक्ता चक्रवाकी वराकी ॥

६ **एवं पर्वतभावे स्वर्णरत्नगजाः ७ तमसो मुष्टिग्राह्यत्वं, ८ ज्योत्स्नायाः कुम्भोपवाह्यत्वं, ९ क्रोधानुरागयो रक्तत्वं असदपि निबध्यते**

३ केषांचिन्नैयत्यं यथा समुद्रेष्वेव मकराः, ताम्रपर्ण्या एव मौक्तिकानि,मलयगिरावेव चंदनोत्पत्तिः हिमगिरावेव भुर्जजन्म,वसन्ते एव कोकिलरुतं, वर्षास्वेव मयूरस्य नृत्यं रुतं च नैयत्येन वर्ण्यते

४ क्वचिद्भिन्नानामप्यैक्यम् तत्र कृष्णनीलहरितश्यामानां ऐक्यं

यथा—सजलजलदनीला भाति यस्मिन्वनाली—
मरकतमणिकृष्णो यत्र नेमिजिनेन्द्र ।
विकचकुवलयालि—श्यामलं यत्सरोम्भ·
प्रमदयति न कांस्कास्तत्पुरं राहडस्य ॥

पीतरक्तयोरैक्यं यथा—नवकनकपिशङ्गं वासराणां विधातुः
ककुभि कुलिशपाणेर्भाति भासां वितानं ।
जनितभुवनदाहारम्भमम्भांसि दग्ध्वा
चलितमिव महाब्धेरुर्ध्वमौर्वानलार्चिः ॥

शुक्लगौरयोरैक्यं यथा—कैलासगौरं वृषमारुरुक्षो
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्त्ते
कुम्भोदरं नाम निकुम्भमित्रम् ॥

एवं रक्तगौरयोः चन्द्रे शशमृगयोः कामकेतने मकरमत्स्ययोः कामस्य मूर्त्तत्वामूर्त्तत्वयोरैक्यं निबध्यते ॥

५ राजवर्णने विद्या वयः शक्तिः प्रजाशास्तिः प्रजारागः धर्मार्थ-कामेषु तुल्यतादिकं वर्ण्यते. यथा किराते दुर्योधनवर्णने—

असक्तमाराधयतु यथायथं विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमियिवान् न बाधतेऽस्य त्रिगणः परस्परम् ॥

६ अमात्यवर्णने—नीतिः शास्त्रं धैर्यं बुद्धिः गभीरता शक्तिः शास्त्रम्, अलोभत्वं जनरागः विवेकिता वर्ण्यते ।

७ पुरोहितवर्णने स्मृतिः वेदः निमित्तं आपत् प्रतिक्रिया दंड-नीतिज्ञता शुद्धिः धर्मः शीलम् कुलक्रमः वर्ण्यते ।

८ देविवर्णने विज्ञान—चातुर्यत्रपाशीलव्रतम् रूपं लावण्यं सौभाग्यं प्रेम शृंगार इत्यादि वर्ण्यते ।

९ कुमारवर्णने शस्त्रशास्त्रकलाबलं गुणाः उच्छ्रया राजभक्तिः सुभगतादिकं वर्ण्यते

यथा—दृष्टिस्तृणीकृतजगत्त्रयसत्वसारा धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कैमारकेऽपि गिरिवद्गुरुतां दधानो वीरोरसः किमयमेत्युत दर्प एव ॥

१० सेनापतौ महोत्साहः स्वामिभक्तिरभीरुता ।
अभ्यासो वाहने शास्त्रे शस्त्रे च विजयो रणे ॥

११ देशे खनी बहुद्रव्य—पण्यधान्याकरोद्भवाः ।
दुर्गग्रामजनाधिक्यं नदीमातृकतादयः ॥

१२ **ग्रामे** धान्यलता वृक्ष–सरसी पशुपृष्ठयः ।
क्षेत्रारघट्टकेदार–ग्रामेयीमुग्धविभ्रमाः ॥

१३ **पुरेऽट्ट**परिखावप्रप्रतोलीतोरणादयः ।
प्रासादाध्वप्रपाराम–वाप्यो वेश्या सतीत्वरौ ॥

१४ **सरस्य**म्भोलहर्यम्भो–गजाद्यंबुजपट्पदाः ।
हंसचक्रादयस्तीरो–द्यानस्त्रोपान्थकेलयः ॥

१५ **अब्धौ** द्वीपाद्रिरत्नोर्मि–पोतयादोजगत्प्लवाः ।
विष्णुकुल्यागमश्चन्द्राद् [1]वृद्धिरौर्वेऽब्दपूरणम् ॥

१६ **सरत्य**म्बुधियायित्वं वीच्यो जलगजादयः ।
पद्मानि पट्पदा हंसाश्चक्राद्याः कूलशाखिनः ॥

१७ **उद्याने** सरणिः सर्वफलपुष्पलताद्रुमाः ।
पिकालिकेकिहंसाद्याः क्रीडावाप्यध्वगस्थितिः ॥

१८ **शैले** मेघौषधिधातु–वंशाकिन्नरनिर्जराः ।
शृङ्गपादगुहारत्न–[2]वनजीवाद्युपत्यकाः ॥

१९ **अरण्ये** हि वराहेभ–यूथसिंहादयो द्रुमाः ।
काकोलूककपोताद्या भिल्लभल्लदवादयः ॥

२० **आश्रमे**ऽतिथिपूजैण–विश्वासो हिंस्रशान्तता ।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलद्रुमाः ॥

१ और्वः–वडवानल. २ उपत्यका–पर्वतासन्नभूमि. (तळाटी)

२१ **मन्त्रे** पञ्चाङ्गता शक्तिषाड्गुण्योपायसिद्धयः ।
उदयाश्चिन्तनीयाश्च स्थैर्यौन्नत्यादिसूक्तयः ॥

२२ **दूते** स्वस्वामितेजः श्री, विक्रमोन्नत्यकृद्वचः ।
शत्रुक्षोभकरी चेष्टा धाष्टर्यं दाक्ष्यमभीरुता ॥

२३ **युद्धे** तु वर्मबलवीररजांसि तूर्य–विश्वासनादशरमण्डपरक्तनद्यः ।
छिन्नातपत्र–रथ–चामरकेतुकुम्भिमुक्तासुरीवृतभटामरपुष्पवर्षाः ॥

२४ **प्रयाणे** भेरिनिस्वान–भूकम्पबलधूलयः ।
करमोक्षध्वजच्छत्र–वणिक्घोटकवेशराः[1] ॥

२५ **मृगयायां** श्वसंचारो वागुरानीलवेषता
भटढक्का मृगत्रासः सिंहयुद्धं त्वरा गतिः ॥

२६ **अश्वे** खरखुरोत्खात–रजः सल्लक्षणस्थितिः ।
तेजो वेगित्वमौन्नत्यं जातिर्धाराग्रपञ्चनम् ॥

२७ **गजे** सहस्रयोधित्वमुच्चत्वं कर्णचापलम् ।
अरिव्यूहविभेदित्वं कुम्भमुक्तामदालिनः ॥

२८ **वसन्ते** दोलाकोकिल–मारुतसूर्यगतितरुदलोद्भेदाः ।
जातीतरपुष्पचयाऽम्रमंजरीभ्रमरझंकाराः ॥

२९ **ग्रीष्मे** पाटलमल्ली–तापसरःपथिकशोषवाताल्यः ।
सक्तुप्रपाप्रपाली–मृगतृष्णाम्रादिफलपाकाः ॥

१ वेशरः=उत्तमाश्वः

३० **वर्षासु** घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ ।
जातीकदम्बकेतक–भंभानिलनिम्नगा–हलिप्रीतिः ॥

३१ **शरदीन्दुरविपटुत्वं** जलाच्छतागस्त्यहंसवृषदर्पाः
सप्तच्छदपद्मसिताभ्रधान्यशिखिपक्षमदपाताः ॥

३२ **हेमन्ते** दिनलघुता शीतयवस्तम्बमरुवकहिमानि ।
**शिशिरे** [1]करीषधूमः कुमुदाम्बुजदाहशिखिरतोत्कर्षाः ॥

३३ **सूर्येऽ**रुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः ।
तारेन्दुदीपकौषधिघूकतमश्चौरकुमुदकुलटार्तिः ॥

३४ **चन्द्रे** कुलटाचक्राम्बुरुहविरहितमोहानीरौज्ज्वल्यम् ।
जलधिजननेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः ॥

३५ **विवाहे** स्नानशुभ्राङ्गभूपोल्लुलुत्रयीरवाः ।
वेदीसीमन्ततारेक्ष–लाजामङ्गलवर्तनम् ॥

३६ **विरहे** तापनिश्वास–चिन्तामौनकृशाङ्गता
अब्जशय्या निशादैर्घ्यं जागरः शिशिरोष्मता ॥

३७ **स्वयंवरे** शचीरक्षा–मञ्चमण्डपसज्जता ।
राजपुत्री नृपाकारान्वयचेष्टाप्रकाशनम् ॥

३८ **सुरापाने** विकलता स्खलनं वचने गतौ ।
लज्जा मानच्युति प्रेमाधिक्यं रक्तेक्षणभ्रमाः ॥

१ करीष=शुष्कगोमयम् २ उलूलु.=ध्वनिविशेषः

**पुष्पावचये** पुष्पावचयः पुष्पार्पणार्थिने दयिते ।
मानाद्यं गात्रस्खलनेर्ष्यावक्रोक्तिसंभ्राश्लेषाः ॥

४० **जलकेलौ** सरःक्षोभश्चक्रहंसापसर्पणम् ।
पद्मग्लानिः पयःक्षेपो दृग्रागो भूषणच्युतिः ॥

४१ **सुरते** सात्विका भावाः सीत्कारः कुड्मलाक्षता ।
काञ्चीकं कणमञ्जीर—रवोऽधरनखक्षते ॥

४२—४३ **प्रातः** कोकाम्बुजोत्कर्षौ, **मध्याह्ने** तापसंप्लवः ।

४४ **सायं** सूर्यातिलौहित्यं चक्रपद्मादिविप्लवः ॥

४५ **अन्धकारे**ऽतिसान्द्रत्वं विश्वलोपसमर्थता ।
आकस्मिकसमारम्भो निःशंकमभिसारिका ॥

**अपि च कवीनां समये अङ्कलेखनप्रकारो बहुधा निम्नदर्शित-दिशा प्रचलति तथाहि—***

**अङ्कानां वामतो गतिः ॥**

एकं भूमीन्दुरूपं द्वाविश्वपक्षाक्षिदोर्यमाः ।
त्रयः क्रमग्रामराम—पुरलोकगुणाग्नयः ॥

* १=एकं—भूमिः, इन्दुः । २—द्वौ—अश्विनौ, पक्षौ, अक्षिणी, दोषौ (भुजौ), यमौ (यमलौ) । ३—त्रयः—क्रमाः, ग्रामाणि, रामाः, पुराणि, लोकाः, गुणाः अग्नयः ।

चत्वारोऽब्धिश्रुतियुग–कृता पञ्चेषुवायव ।
भूताक्षा· षड्रसाङ्गर्तु–तर्का. सप्त स्वरर्षय· ॥

तुरङ्गपर्वतौ चाष्टौ वसुसर्पमतङ्गजा. ।
नवसङ्ख्या नन्दरन्ध्र–निधिगोऽङ्कनभश्चराः ॥

दशाशाः शून्यमभ्रं स्या–देकादशमहेश्वरा ।
द्वादशार्कास्तथा विश्वे–त्रयोदश चतुर्दश ॥

मन्विन्द्रभुवनं पञ्च–दश तिथ्योऽथ षोडश ।
कलाष्टिराजोऽथात्यष्टिर्धना: सप्ताधिकादश ॥

धृतयोऽष्टादश प्रोक्ता अतिधृत्यूनविंशति· ।
स्युर्विंशतिः कृतिनखाङ्गुल्यश्चैकविंशति· ॥

प्रकृतिर्मूर्छना.स्युर्द्वाविंशतिर्जातिराकृति· ।
जिना· सिद्धाश्चतुर्विंश–तिस्तत्त्वं पञ्चविंशतिः ॥

---

४–चत्वारः–अब्धयः, श्रुतयः, युगा., कृताः । ५–पञ्च–इषव., वायव , भूताः, अक्षा., । ६–षट्–रसा , अङ्गानि, ऋतव., तर्का. । ७–सप्त––स्वरा·, ऋषय., तुरङ्गा., पर्वता· । ८–अष्टौ–वसूनि, सर्पा , मतङ्गजाः । ९–नव–सङ्ख्याः, नन्दाः, रन्ध्राणि, निधय , गाव , अङ्कानि, नभश्चरा । १० दश–आशाः । ० शून्य अभ्रम् । ११–एकादश–महेश्वरा. । १२–द्वादश–अर्का । १३–त्रयोदश–विश्वे-देवा. । १४–चतुर्दश–मनव , इन्द्राः, भुवनानि । १५–पञ्चदश, तिथ्य. । १६–षोडश–कला –अष्टय., राजान. । १७–सप्तदश–अत्यष्टय , धना. । १८–अष्टादश–धृतय. । १९–एकोनविंशति., अतिधृतय. । २०–विंशति. कृतय·, नखा., अङ्गुलय । २१–एकविंशति.–प्रकृतय., मूर्छना., । २२–द्वाविंशति.–जातयः, आकृतयः । २४–चतुर्विंशतिः, जिना. सिद्धा. । २५ पञ्चविंशतिः–तत्त्वानि

सप्तविंशति ऋक्षाणि द्वात्रिंशद्दशना द्विजाः ।
त्रयस्त्रिंशत्सुरास्ताना ऊनपञ्चाशदूचिरे ॥
पर्यायशब्दैरपि कल्पनीया, सङ्ख्याङ्कसंज्ञा सुधिया धियाऽऽसाम् ॥

**इति कविसमयः समासतो दर्शितः, विशेषजिज्ञासुना काव्यानुशासन–तदीयविवेक—काव्यप्रकाश—साहित्य–दर्पण–तट्टीकादयो–विलोकनीयाः ।**

श्रीमत्सूर्यपुरे श्रेष्ठे–गोपीपुरे धुरंधरः ।
श्रीमतोऽनन्तनाथस्या–नुभावाच्च गुरोरपि ॥ १ ॥
साहित्यस्मृतये सुष्ठु–बालबोधकृतेऽपि च ॥
साहित्याकरग्रन्थेभ्यो मंजरीं कृतवान्मुदा ॥ २ ॥
वर्षे रसाङ्कनन्देन्दु–प्रमिते मार्गशीर्षके ॥
पूर्णिमायां प्रभातायां प्रभाते पूर्णतामिता ॥ ३ ॥

इति श्री सार्वीयसार्वसरस्वतीसुधासेकसिञ्चितसमस्तसंसारसर्वज्ञशासनसार्वजनीन-सार्वभौमाचार्यश्रीमद्विजयनेमिसूरीश्वर–पट्टाम्बराम्बरमणि–व्याख्यानपीयूष-परिवर्षणप्रावृट्पयोद–कविरत्न–शास्त्रविशारदाचार्यश्रीविजयामृतसूरी-श्वरविनयनिधानविनेयरत्नमुनिचर्यश्रीपुण्यविजयपादपद्म-परागास्वादलोलुपमधुकरमुनिधुरंधरविजयसंदृब्धायां साहित्यशिक्षामञ्जर्यां पञ्चमी प्रमितिः ॥

**तत्समाप्तौ च समाप्तेयं साहित्यशिक्षामञ्जरी ॥**



२७ सप्तविंशतिः–ऋक्षाणि । ३२–द्वात्रिंशत्–दशनाः–द्विजाः । ३३–त्रयस्त्रिंशत्–सुराः । ४९–एकोनपञ्चाशत्–ताना. । एव एतेषा समानार्थकशब्दैर्यथा भूमिस्थाने भूमहीपृथ्वीत्यादि धीमता–सङ्ख्याया अवगमः कार्यः ।

## परिशिष्ट १



### सिद्धसारस्वताचार्यश्रीवप्पभट्टिसूरिविरचितः

# अनुभूतसिद्धसारस्वतस्तवः ॥

मुनिश्रीधुरन्धरविजयरचितया 'शिशुहिता' ख्यया व्याख्ययालङ्कृतः ।



प्रणम्य नेमिपादाब्जं गुरुगौरवसंयुतम् ॥
व्याख्यां शिशुहितां कुर्वे सिद्धसारस्वते स्तवे ॥ १ ॥

अनेकजन्मार्जितसुकृतवशाद्विघ्नरहितत्वाच्चानुपमसरस्वतीप्रसादमासाद्याचार्य श्रीमन्तो वप्पभट्टिसूरयः सर्वत्र जयिनोऽपि स्वकीयपथप्रवर्तमानजनोपकाराय सरस्वतीसमाराधनरूपमनुभूतसिद्धसारस्वतस्तवाभिधानं स्तोत्रविशेषं व्याकुर्वन्तः प्रथमं सरस्वतीदर्शनप्रयोजके सूक्ते अवतारयन्ति ।

**कलमरालविहङ्गमवाहना सितदुकूलविभूषणलेपना ॥**
**प्रणतभूमिरुहामृतसारिणी प्रवरदेहविभाभरधारिणी ॥१॥**

**अमृतपूर्णकमण्डलुहारिणी त्रिदशदानवमानवसेविता ॥**
**भगवती परमैव सरस्वती मम पुनातु सदा नयनाम्बुजम् ॥**
**युग्मम् ।**

**व्याख्या**—कलमरालेति=कल—मधुरशब्दः तज्जनको मरालः—हंसः कलमरालः सचासौ विहङ्गमः विहायसा गच्छतीति विहङ्गमः—पक्षी, कर्मधारयसमासश्चाभेदार्थकः तथाच हंसाभिन्नपक्षीत्यर्थः, कलमरालविहङ्गमो वाहनं यस्याः सा कलमरालविहङ्गमवाहना, बहुव्रीहावन्यपदार्थस्य प्राधान्यात्, अन्यस्य चात्र स्त्रीत्वेन वाहनशब्दात् 'आत्' ॥ २ । ४ । १८ । इति सिद्धहेमसूत्रेण 'आप्' स्त्रीप्रत्ययः, अत्र—प्रथमपादस्थमरालशब्दं स्तुतिकारः सित—शुभ—इत्यादिकं विहाय कलविशेषणेन विशेषयतीत्यत्रेदं तात्पर्यं यत् सितत्व—शुभत्वादिकं तु कारणान्तरेणापि भवति किन्तु कल—मधुरशब्द—जननसामर्थ्यन्तु सरस्वतीसेवाजन्यम् इति वाहनव्याजेन सेवां कृत्वा मरालेन तत् सम्पादितमिति ।

सर्वदा दर्शनीयत्वेऽपि स्त्रीत्वात् वस्त्रादिरहितावस्थायां ब्रह्मचारिणां तदीयदर्शनयाञ्चनं सर्वथानुचितमिति वस्त्रादिविभूषितस्वरूपां तामाह—सितदुकूलविभूषणलेपनेति—सितं शुभ्रं च तत् दुकूलं सूक्ष्मक्षौमवस्त्रं इति सितदुकूलं, विभूषणं विशेषेण भूषयति शरीरमितिविभूषणमलङ्कारः, लेपनं—जलघृष्टचन्दनादिसुगन्धिद्रव्यम्, सितदुकूलं विभूषणं लेपनं च यस्याः सा सितदुकूलविभूषणलेपना सितदुकूलेतिद्वितीयविशेषणदानेन सरस्वत्याः स्वस्थमनोरमावस्था बोधिता, अन्यथा अतदवस्थायां सविनयं प्रार्थिताऽपि सा प्रार्थितार्थदानं तु दूरं प्रत्युत विपरीतफलं ददाति, यदुक्तं नैषधेऽपि *त्वया निधेया न गिरो मदर्था, क्रुधा कदुष्णे हृदि नैषधस्य ॥ पित्तेन दूने रसने सिताऽपि, तिक्तायते हंसकुलावतंस ! ॥ इति प्रमोदितावस्थायामेव प्रार्थनं कर्तव्यमितिभावः—

* (अर्थ.) हे हसंकुलावतंस ! हे मरालकुलनायक ! क्रोधेनेषत्तप्तेऽपि नलस्य हृदये त्वया मदीयवचनानि न प्रयुक्तव्यानि यत् पित्तेन कलुषितायां जिह्वया शर्कराऽपि तिक्तानुभवं उत्पादयति । इति दमयन्त्या प्रति—उक्तिः

द्वितीयपादेन सरस्वत्या स्वस्थमनोरमावस्था बोधिता, तदवस्थायां च भक्तैः सा प्रार्थिता, तदनु सा किं करोति ? इति जिज्ञासायामाह प्रणतेति—प्रणता—नम्रीतताः ये जनास्ते एव तमिरुहा—वृक्षाः तेभ्यः—अमृतं पीयूषं सारयति सिञ्चति या सा प्रणततमिरुहामृतसारिणी भक्तजनवाञ्छितपुरयित्रीति तदर्थः, प्रवरदेहविभाभरधारिणी—प्रवरः श्रेष्ठः मनोज्ञ इतियावत् यो देहः तनुः तस्य या विभा—कान्तिः तस्या भरः समूहः तं धारयति दधातीति प्रवरदेहविभाभरधारिणी देदीप्यमानशरीरेति यावत् ॥ १ ॥

प्रथम तत्कस्य तृतीयपादे उक्तं यत् प्रणत तमिरुहामृतसारिणीति, यदि तस्याः पार्श्वे अमृतमेव न स्यात् तदा सा कुतः सिञ्चतीत्याह—अमृतेति अमृतं सुधा तेन पूर्णं पूरितं यत् कमण्डलुः जलपात्रविशेषः तस्य हारिणी उद्वहनशीलवती अर्थात् वामहस्तधृतामृतकमण्डलुरिति, अनेन सेवकास्तामाराध्य ततोऽमृतं प्राप्य सचेतना भवन्तीति तच्चितम् । नहि जगति पीयूषमन्तरेणाधिकं विद्यतेऽन्यत्, इति सर्वेऽपि त वाञ्छन्ति अनन्यचेतसा, तत्तु सरस्वत्याः पार्श्वेऽस्तीति ततस्तं प्राप्तु सर्वेऽपि तां सेवन्ते तदेवाह—त्रिदशेति—त्रिदशाः देवा, दानवाः दैत्याः, मानवाः मनुष्या, त्रिदशाश्च दानवाश्च मानवाश्चेति त्रिदशदानवमानवा, तैः सेविता पर्युपासिता या सा त्रिदशदानवमानवसेविता । भगवती—ज्ञानवती यद्यपि भगशब्दस्य—भगोऽर्क १ ज्ञान २ माहात्म्य ३ यशो ४ वैराग्य ५ मुक्तिषु ६ । रूप ७ वीर्य ८ प्रयत्नेच्छा ९–१० श्री ११ धर्मैश्वर्य १२–१३ योनिषु १४ ॥ १ ॥ इत्यनेन चतुर्दशार्था, तेषु बहवोऽर्था संभवन्ति अत्र, तथापि सरस्वत्या ज्ञानगुणस्यैव प्राधान्यात् प्रकृते भगशब्दो ज्ञानार्थको ग्राह्यः । परमा-सर्वोत्कृष्टा सरस्वती शारदादेवीति विशेष्यम्. एव सैव नान्या अर्थात् स्वस्वरूपैव-

नतु प्रतिकृतिरूपा, मम मदीयं नयनाम्वुजम् नेत्रकमलम्, सदा सर्वकालं पुनातु पवित्रयतु। दर्शनं दत्वा चक्षुषी निर्मलीकरोतु इति भाव। युग्ममेतत् श्लोकद्वय-सम्बद्धत्वात्—तदुक्तम् 'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्। कलापकं चतुर्भिः स्यात् तदुर्ध्वं कुलकं स्मृतम्' ॥ १ ॥ इति। स्तोत्रेऽस्मिन् नवश्लोकपर्यन्तं द्रुतविलम्बितम् छन्दः, तल्लक्षणं यथा—द्रुतविलम्बितमाह नभौ भरौ ॥ इति ॥२॥

**जिनपतिप्रथिताखिलवाङ्मयी**
**गणधराननमण्डपनर्तकी ॥**
**गुरुमुखाम्वुजखेलनहंसिका**
**विजयते जगति श्रुतदेवता ॥ ३ ॥**

व्याख्या—जिनपतीति=जिनपतिस्तीर्थंकरः तेन प्रथितं विस्तारितम्, यत् अखिलं सम्पूर्णं वाङ्मयं आगमं तत् जिनपतिप्रथिताखिलवाङ्मयम्, तत्स्वरूपा या सा जिनपतिप्रथिताखिलवाङ्मयी अर्थात् जिनवरागमाधिष्ठात्रीति, गणधरानन-मण्डपनर्तकीति-गणधराः तीर्थंकृतो मुख्यशिष्या गणभृतः तेषां आननानि मुखानि तान्येव मण्डपानि नृत्यस्थानानि तत्र नर्तकी नृत्यकारिणी. गुरुमुखाम्वुजखेलनहं-सिकेति—गृणाति उपदिशति धर्मं, गिरति नाशयति वा अज्ञानं इति गुरु आचा-र्यादि तस्य मुखं वदनं तदेवाम्वुजं कमलं तत्र खेलने क्रीडने हंसिका मराली, श्रुतदेवता—सरस्वतीदेवी जगति ब्रह्माण्डभाण्डोदरे भुवने विजयते सर्वोत्कर्षेण वर्तते अत्र व्याजेनागमावतारक्रमोऽपि दर्शित तच्चैवम् प्रथमं जिनवरैः श्रुतमुप-दिष्टम् तच्च—द्वादशाङ्गीरूपेण गणधरैर्ग्रथितम् तदनु आचार्यैस्तत् निर्युक्ति—भाष्य-चूर्णि—वृत्ति—प्रमुखैरलंकृत्य विस्तारितम् इति। श्लोकेऽत्र रूपकालंकारः ॥ ३ ॥

प्रथमश्लोकद्वये सरस्वत्या दर्शनं याचितम्, प्रसन्ना सा दर्शनमपि ददाति, तथापि यदि सा कालीमहाकालीवत् भयङ्कररूपा चेत् बालानां तदीयदर्शनं प्रमोदकरं तु न प्रत्युत भयङ्करं भवेदिति तदीयसौम्यस्वरूपं वर्णयति ॥

**अमृतदीधितिबिम्बसमाननां**
**त्रिजगतीजननिर्मितमाननाम् ॥**
**नवरसामृतवीचिसरस्वतीं**
**प्रमुदितः प्रणमामि सरस्वतीम् ॥ ४ ॥**

व्याख्या—अमृतेति=अमृतसदृशी शीतला दीधितिः किरणं यस्य स अमृतदीधितिश्चन्द्रः तस्य बिम्बः वर्तुलाकृति तत्समं सदृशं आननं वदनं यस्याः सा तथोक्ता तां अमृतदीधितिबिम्बसमाननाम् शशिसमसौम्यवदनामिति यावत् अत्र यद्यपि सूर्यबिम्बसमाननां इत्युक्ते तत्र तेजस्वितान्धकारनाशकत्वादिगुणानां सूचनं भवेत् तथापि अतितेजस्विनस्तीव्ररुचेः सूर्यस्य दर्शनं दुष्करं, सुकरं पुनः आह्लादकस्य तेजस्विनश्चन्द्रमसो दर्शनं, प्रकृते च दर्शनस्य प्राधान्यात् तथा वर्णितम् । यं यं सा दर्शनं ददाति ते सर्वेऽपि तस्या बहुमानं कुर्वन्तीति तस्या विश्वमाननीयत्वं दर्शयति त्रिजगतीति—त्रयाणां जगतां समाहारः त्रिजगती तद्वर्तिनो ये जनास्ते त्रिजगतीजनास्तैर्निर्मितं सम्पादितं मानमेवमाननं सन्मानं यस्याः सा त्रिजगतीजननिर्मितमानना, ताम् तथोक्ताम् । नवरसामृतवीचिसरस्वतीम् नव नवसंख्याकाश्च ते रसा विभावानुभावसंचारिभावैरभिव्यक्ताः स्थायिभावा नवरसा "शृङ्गारहास्यकरुण—रौद्रवीरभयानका । बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः" ॥ इत्युक्ता ,ते एव अमृतं नव-

रसामृतं तस्य वीचयस्तरङ्गाः नवरसामृतवीचयः, सरो जलं तद्वर्तते यस्यां स सरस्वती नदी नवरसामृतवीचिभ्यः सरस्वती या सा ताम् नवरसामृतवीचि-सरस्वतीम् नवरसास्वादजन्यपरमानन्दसन्दोहसम्पादिकामिति यावत् । सरस्वत तदभिधानां वाग्देवीम्, प्रमुदितः प्रसन्नचेताः सन् प्रणमामि नमस्करोमि अत्र प्रपूर्वकस्य नमतेः स्वापकृष्टत्वप्रकारकबोधानुकूलव्यापारोऽर्थः । अत्रोपमायम-कालंकारौ ॥ ४ ॥

**विततकेतकपत्रविलोचने !**
**विहितसंसृतिदुष्कृतमोचने ? ॥**
**धवलपक्षविहङ्गमलाञ्छिते !**
**जय सरस्वति ? पूरितवाञ्छिते ! ॥ ५ ॥**

व्याख्या—वितत्तेति=केतक केतकीवृक्षम् तस्य पत्रं—पर्णं केतकपत्रम् विततं—विस्तृतं यत् केतकपत्रं तत् विततकेतकपत्रम् तद्वत् विशाले विलोचने यस्याः सा तत्सम्बोधने विततकेतकपत्रविलोचने ! विहितेति—संसृतिः संसरन्ति देवनरतिर्यन्नरकगतौ पर्यटन्ते जीवा यत्र सा संसृतिः ससारः तद्भवं यत् दुष्कृतं पापं तत् संसृतिदुष्कृतम् ततो मोचनं—मुक्तिः, विहितम् संपादितं संसृति—दुष्कृतमोचनं यया सा तत्सम्बुद्धौ विहितसंसृतिदुष्कृतमोचने ! धवलेति-विहङ्गमः पक्षी धवलौ श्वेतौ पक्षौ पत्रौ यस्य स धवलपक्षः 'गरुत् पक्षच्छदाः पत्रम्' इत्यमरः स चासौ विहङ्गमः धवलपक्षविहङ्गमः, हंसः तेन लाञ्छितं अङ्कितं स्वरूपं यस्याः सा तदामन्त्रणे धवलपक्षविहङ्गमलाञ्छिते ! हंस-वाहने ! इति यावत्. पूरितं पूर्णीकृतं वाञ्छितं मनोऽभिलषितं लोकानां यया सा

तत्सम्बोधने पूरितवाञ्छिते ? सरस्वति ? ब्राह्मि ? त्वं जय सर्वोत्कर्षेण वर्तस्व । अन्तिमाक्षरद्वयावृत्त्याऽत्र यमकालङ्कारः ॥ ५ ॥

**भवदनुग्रहलेशतरङ्गिता—**
**स्तदुचितं प्रवदन्ति विपश्चितः ॥**
**नृपसभासु यतः कमलाबला—**
**कुचकलाललनानि वितन्वते ॥ ६ ॥**

व्याख्या—भवदनुग्रहेति=विपश्चित विद्वांसः 'विद्वान् विपश्चित् दोषज्ञः' इत्यमरः भवनुग्रहलेशतरङ्गिता' सन्त , अनुग्रह. प्रसाद' तस्य लेशः इषत् सम्बन्ध' अनुग्रहलेश भवत्या अनुग्रहलेशेन तरङ्गिताश्चञ्चलीभूताः भवदनुग्रहलेश-तरङ्गिता' तव कृपालवकल्लोलोल्लोलिता इति तदर्थे', नृपसभासु नृपाणां राज्ञां सभा' परिषद', 'समज्या परिषद्गोष्ठी सभा समितिसंसद'' इत्यमरात्, तासु तदु-चितम् तेषां राज्ञा उचितम् उपयुक्तम् अर्थात् पथ्यं सन्मनोऽनुकूलमिति तदुचितम् मनोऽनुकूलमपि अहितकरं चेदुचितं नोच्यते, विपश्चितस्तादृशमपथ्यं न भाषन्ते यदुक्तं भारविणा 'नहि प्रियं, प्रवक्तुमिच्छन्ति मृषा हितैषिण.' इति तत्र 'हितं मनोहारि च दुर्लभं वच'' इति किरातकथितं सामान्यजनानिर्वचनीयं वचनीयम् प्रवदन्ति प्रयुञ्जन्ति तयः तथा वाग्व्यापारप्रयोजनात् कमलाबला-कुचकलाललनानि कमला लक्ष्मीः सैवाबला—ललना तस्या कुचौः स्तनौ तयोः कला भूति. तस्या ललनानि क्रीडनानि रमारामावक्षोजविभूतिलीला' इति वितन्वते विस्तारयन्ति पण्डिता इति शेषः । राज्ञोऽनुरज्याविलम्बेन ततो नितान्तं सम्पदामाप्नुवन्तीति भावः । अत्रानुप्रासालङ्कृतिः ॥ ६ ॥

अधुना लक्ष्मीतोऽप्यधिकं महिमानमस्या दर्शयति—

**गतधना अपि हि त्वदनुग्रहात्**
**कलितकोमलवाक्यसुधोर्मयः ॥**
**चकितबालकुरङ्गविलोचना**
**जनमनांसि हरन्तितरां नराः ॥ ७ ॥**

व्याख्या—गतधना इति=गतधनाः धनहीना अपि "माता निन्दति नाभिनन्दति पिता, भ्राता न संभाषते, भृत्यः कुप्यति नानुगच्छति सुतः, कान्ता च नालिङ्गते ॥ अर्थप्रार्थनशंकया न कुरुतेऽप्यालपमात्रं सुहृत, तस्माद्द्रव्य मुपार्जयाशु सुमते ! द्रव्येण सर्वेयशाः" ॥ इत्येतादृशीं दशामनुभवाना अपि नराः मानवाः त्वदनुग्रहात् तव प्रसादात् कलितेति—कोमलं मृदु यत वाक्यं वचनं तत् कोमलवाक्यं तदेव सुधा तस्या उर्मयः तरङ्गाः इति कोमलवाक्यसुधोर्मय. कलिताः सम्पादिता. तथोर्मयो यैस्ते कलितकोमलवाक्यसुधोर्मयः, तथा च चकितेति—कुरङ्गो मृगविशेषः बालः शिशुः स चासौ बालकुरङ्गः चकितो विस्मितो बालकुरङ्गः चकितबालकुरङ्गः तस्य विलोचने इव विलोचने नेत्रे येषां ते चकित-बालकुरङ्गविलोचनाः दीर्घनयना इति शक्त्या, व्यञ्जनया तु विस्तृतशास्त्रविषय-कप्रतिभावन्तः इति भावः,जनानां लोकानां मनांसि चेतांसि हि-निश्चयेन हरन्तितरां अतिशयेन गृह्णन्ति, निर्द्रव्या अपि तवानुभावात् स्ववचनमाहात्म्यात् सर्वानपि मोहयन्ति वशीकुर्वन्तीति भावः । जनमनोहरणसामर्थ्यन्तु धनेऽस्ति तथापि तदभावेऽपि विद्वांसो जनमनांसि हरन्तीति कारणाभावेऽपि कार्योत्पत्तिर्वर्णितेति विभावनालंकारः—लक्षणन्तु ' विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ' इति विश्वनाथः ॥ ७ ॥

करसंरोरुहखेलनचञ्चला
तव विभाति परा जपमालिका ॥
श्रुतपयोनिधिमध्यविकस्वरो-
ज्ज्वलतरङ्गकलाग्रहसाग्रहा ॥ ८ ॥

व्याख्या—करसरोरुहेति=हे देवि तव भवत्याः परा उत्कृष्टा जपमालिका जपाय ध्यानाय माला जपमाला एव जपमालिका स्वार्थे कः विभाति शोभते कथं सा उत्कृष्टा इत्यपेक्षायामाह—करेति—करः हस्तः स एव सरोरुहम् कमलम् तत्र खेलने क्रीडने चञ्चला चपला करसरोरुहखेलनचञ्चला भारतीदक्षिणहस्त-स्थितेतिभावः यतश्च सा भारतीकरस्पर्शमापन्ना तत उत्कृष्टा, अपि च श्रुतेति-श्रुतं शास्त्रश्रवणजनितं ज्ञानं तस्य पयोनिधिः समुद्रः तस्य मध्ये अन्तः विकस्वरः विकसितः उज्ज्वलः निर्मल, यस्तरङ्गः वीचिः तस्य कला विभूतिः तस्या ग्रहे ग्रहणे साग्रहा आग्रहवतीति श्रुतपयोनिधिमध्यविकस्वरोज्ज्वलकलाग्रह-साग्रहा । अत्राग्रहस्य चेतनधर्मत्वेन याचितकमण्डनन्यायात् परम्परासम्ब-न्धत्वाद्वा तथावसेयम्, इदमत्रावधेयम् यथा पयोनिधिर्गंभीरस्तथा श्रुतवारिधिरपि, सत्यपि सागरे गंभीरे तस्य तटे सर्वेऽपि निःशङ्कमटन्ते किन्तु न केऽप्य वगाहन्ते तन्मध्यभागम् तथा श्रुतसागर तटमटन्ते सर्वे परं न गच्छन्ति तदन्तः, केचित्तु बहु प्रयत्न तत सागरमध्यमाप्नुवन्ति किन्तु तदन्तः प्रविश्य न ततः रत्नानि परं ये सत्त्वशीला दृढरज्ज्वादिसाधनवन्त स्त एव जलधिमध्यमाविश्य सम्पत्तिमाप्नुवन्ति, एवं भूरिप्रयासतः केचिद्धीमन्तः श्रुतोदधिमध्यं प्राप्यापि न ततस्तत्त्वरत्नानि लभन्ते किन्तु ये प्रतिभावन्तो जपमालादिना भारतीमा राधयन्ति त एव श्रुतज्ञानरहस्यमाप्नुवन्ति ॥ ८ ॥

'अजाव्याघ्रन्यायात्' प्राप्तेऽप्यनेकसुखसाधने सभयचेतस्कैः सुखस्वादो नो लभ्यते इति भारती भक्ता त भयाभावं वर्णयति—

**द्विँरदकेसरिमारिभुजङ्गमा—**
**सहनतस्कररराजरुजां भयम्ँ ॥**
**तंवगुणावलिगानतरङ्गिणां**
**नँ भविँनां भवतिँ श्रुतदेवंते ॥ ९ ॥**

व्याख्या—द्विरदेति=हे ततदेवते ! हे सरस्वति ! तव भवत्याः गुणावलिगानतरङ्गिणाम्—गुणानामावलिः श्रेणिः गुणावलिः तस्या गानं आलापवद्धकीर्तनम् तस्य तरङ्गाः उल्लासप्रकाराः ते सन्ति येषां ते गुणावलिगानतरङ्गिणः तेषां तथा भूतानां भविनां भव्यजीवानां शिवपदप्राप्तियोग्यानाम् भयं भीतीः न भवति केषां भयमित्याह—द्विरदेति द्वौ रदौ दन्तौ यस्य स द्विरद हस्ती केसराः—शटाः सन्ति यस्य सः केसरी—सिंह मारी रोगविशेषः भुजङ्गम भुजैर्गच्छतीति भुजङ्गमः सर्पः, असहनः न सहते परोत्कर्षमिति असहन शत्रुः तस्करः चौरः राजा नृपः, रुग् रोगः इत्येतेषां द्वन्द्वः तेषां षष्ठी बहुवचने द्विरदकेसरिमारिभुजङ्गमासहन तस्कररराजरुजाम् । एतावता सरस्वतीसेवका अकुतोभया भवन्तीतिभावः, यद्यपि सरस्वत्याः विद्यादातृत्वस्यैव जनप्रसिद्धि तथापि सभयस्य विद्याग्रहणाधिकारित्वाभावात् प्रतिबन्धकत्वाभावसम्पादनायेयमुक्ति ॥ ९ ॥

अधुना स्तुतिरहस्यं देव्या अनुपमप्रसादसाधनप्रकारं च दर्शयति—

**ओँ ह्रीँ क्लीँ ब्लीँ ततः श्रीँ तदनु हसकलह्रीँ अथो ऐँ नमोऽन्ते**
**लक्षं साक्षाज्जपेद्यः करसमविधिना सत्तपा ब्रह्मचारी ॥**

२४ २३ २१ २५ २२ २१
निर्यान्तीं चन्द्रबिम्बात्कलयति मनसा त्वां जगच्चन्द्रिकाभां
२० २७ २८ २९ ३२ ३० ३१
सोऽत्यर्थं वह्निकुण्डे विहितघृतहुतिः स्याद्दशांशेन विद्वान्॥

**व्याख्या**—ॐ इति=पूर्वं ॐ अवति रक्षति भयेभ्यः सर्वेभ्यः इति अव् धातोरौणादिकं ॐ इति सिद्धं रूपं एतावता रक्षकाक्षरस्यादौ नियोजनात् संपूर्ण-मन्त्रस्यापि रक्षणकर्तृत्वं सूचितम् ह्रीं हरते सर्वान् दोषान् इति पूर्ववदौणादिकम् क्लीं ब्लीं-ततः तदनन्तरं श्रीं तत् तेषां न्यस्तानामेतेषां अनु पश्चात् हसकलह्रीं इत्येतेषां न्यासः अथो अनन्तरम् अन्ते प्रान्ते ऐं नमः इति बीजस्य न्यासः इति तन्निर्गतः संपूर्णमन्त्रश्चैवम्="ॐ ह्रीं क्लीं ब्लीं श्रीं हसकलह्रीं ऐं नमः." अमुं मन्त्रं यः कोऽपि सत्तपाः तपस्याशीलः एतेनातपस्विनोऽधिकारविरहः ब्रह्मचारी ब्रह्म शास्त्रं आत्मध्यानं अथवा ब्रह्म-सप्तमोधातु तं चरति रक्षतीति तथोक्त· अष्टाङ्गमैथुनविनिवृत्तो ब्रह्मचारी=अष्टांगमैथुनं यथा—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ १ ॥

एतन्मैथुनमष्टांगं प्रवदन्ति मनीषिणः ॥
विपरीतं ब्रह्मचर्य-मेतदेवाष्टलक्षणम् ॥ १ ॥ इति

करसमविधिना नन्द्यावर्तेन शंखावर्तेन वा एतावता करमालयैव जपो विहितः कियज्जपेदित्याह लक्षं लक्षप्रमाणं नियतसंख्याकेन दिनेन नतु एकाहेना-

संभवात्, साक्षात् अनुक्रमेण नतु मध्ये विरम्य, यः जपेत् जपं कुर्यात् स जगच्चन्द्रिकाभां जगति भुवने प्रसरन्ती या चन्द्रचन्द्रिका तदाभां तत्तुल्यां त्वां भवन्तीं चन्द्रबिम्बात्-चन्द्रमसो मण्डलात्, निर्यान्तीम्—निर्गच्छन्तीं मनसा चेतसा कलयति साक्षात्करोति, समनस्केनेन्द्रियेण त्वां साक्षात्पश्यतीत्यर्थः, अत्यर्थं अतिशयं उपरोक्तजपानन्तरं विशेषमभिलाषुकेन, वह्निकुण्डे दशांशेन दशसहस्रेण लक्षदशांशो दशसहस्रस्तेन विहितघृतहुतिः कृतघृतहोमः, विद्वान् स्यात् अर्थात् विधिपूर्वकं

---

१ नन्दावर्तशंखावर्तस्वरूपं यथा प्रथम कनीनिकाप्रथमपर्वत आरभ्य क्रमशस्तद्द्वितीयान्त्ये ततोऽनामिकायास्तृतीयं मध्यमाया अन्तिमं मध्यमं च ततोऽनामिकायामध्यप्रथमे मध्यमाया आद्य ततस्तर्जन्या अग्रिममध्यचरमाणि ज्ञेयानि एतत्प्रकारेण गणने नन्दावर्तेन गण्यत इति कथ्यते

२ शखावर्तगणनायां तु प्रथममनामिकाया मध्यपर्व ततः क्रमशः मध्यमाया मध्यमाग्रिमे अनामिकाया आद्यपर्व अग्रिमं च कनिष्ठाया मध्यमान्तिमे च तस्या एवानामिकामध्यमयोश्चरमपर्वणी तर्जन्याश्चरममध्याद्यपर्वाणि ग्राह्याणि । अधिक गुर्वाम्नायतो ज्ञेयम् ।

स्थापना

नन्दावर्त.

| | | | |
|---|---|---|---|
| ३ | ४ | ५ | १२ |
| २ | ७ | ६ | ११ |
| १ | ८ | ९ | १० |

शंखावर्तः

| | | | |
|---|---|---|---|
| ७ | ८ | ९ | १० |
| ६ | १ | २ | ११ |
| ५ | ४ | ३ | १२ |

वह्निकुण्डे घृतेनाहुतिं ददन् सन् यः लक्षदशांशं दशसहस्रं जपेत् स विद्वान् धीमान् स्यादचिरेण भवेदिति ॥ सूक्तेऽस्मिन् स्रग्धरावृत्तम्=म्रभ्नैर्यानां त्रयेण-त्रिमुनियतियुता स्रग्धराकीर्तितेयम् इति तल्लक्षणात् ।

**संप्रति मंत्रमाहात्म्यं दर्शयन् भक्तं व्यापारान्तरात् विनिवारयन् मंत्राभिमुखं करोति—**

१ ४
**रे रे लक्षणकाव्यनाटककथा-चम्पूसमालोकने**
६ ८ २ ५ ७ ३
**कायासं वितनोषि बालिश ! मुधा, किं नम्रवक्त्राम्बुजः ॥**
११ १४ १० ९ १२ १३
**भक्त्याऽऽराधय मंत्रराजमहसाऽनेनानिशं भारतीं ॥**
१५ १६ १७ १८ ०
**येन त्वं कवितावितानसविताऽद्वैतप्रबुद्धायसे ॥ ११ ॥**

**व्याख्या**—रे रे इति=रे रे बालिश [१]-भो भो बाल [२] शीघ्रसम्बोन्धनाय वीप्सा मंत्रमहिमाख्यापनाय च, अप्राप्तशास्त्रपरिशीलनजन्यबोधप्रकर्षो=बाल', नम्रं अधोविहितं वक्त्रं-मुखं तदेवाम्बुजं कमलं येन स. नम्रवक्त्राम्बुजः, पुस्तक एव दत्तदृष्टिः सन्, लक्षणेति-लक्षणं लक्ष्यतेऽवबुध्यते शब्दसंसिद्धिर्येन तल्लक्षणम् व्याकरणशास्त्रम्, काव्यम् कवति मधुरं वर्णयतीति भगवद्गुणग्रामाभिमुखकारक चेतोद्रावकपदसमूहम्-काव्यम्, नाटकं-नट्यतेऽभिरूप्यते इति नाटकम् विख्यातवृत्तं नान्दी-पूर्वरंग—प्रस्तावना—सन्धिपञ्चकप-ञ्चाद्यङ्कप्रभृतिसमेतम्

रङ्गमण्डपे प्रयोगोपयोगित्वाद्दृश्यम्–काव्यविशेषं नाटकम् कथा कथ्यते उच्यते पूर्वापरसन्दर्भो यया सा कथा तत्र वर्णनीयवर्णनं साहित्यदर्पणे यथा—

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्" । ६–३३२–३३३ ।

सा च तिलकमंजरीप्रमुखा. चम्पूः पद्यमिश्रितं गद्यकाव्यम्—

"गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते" इत्युक्तेः

लक्षणं च काव्यं च नाटकं च कथा च चम्पूश्च इत्येतेषां इतरेतरयोगद्वन्द्वः इति लक्षणकाव्यनाटककथाचंप्वः तासां समालोकने सम्यगध्ययने लक्षणकाव्यनाटक कथाचम्पूसमालोकने कायासं–कुत्सितपरिश्रमम् मुधा व्यर्थं किं कथं वितनोषि विस्तारयसि एतेन जडबुद्धेः लक्षणकाव्यादिशास्त्राध्ययनपरिश्रमः कुत्सितः यतश्च तेन न भविता तस्य काव्याद्यवगमो नात्महितं च इति निरर्थक एव तदायासः तत् तादृशः श्रमो नैव कर्तव्यः इति भावः ननु तर्हि अध्ययनं परित्यज्य किं कर्तव्यमिति सुहृद्भूत्वा श्रीमन्त एव प्रतिपादयन्तु यदहमाचरिष्ये इत्यत आह परार्धेन भक्त्येति=अनेन पूर्वसूक्तप्रदर्शितेन मंत्रराजमहसा मंत्राणां राजा मंत्रराजः महः तेजः मंत्रराजाभिन्नं महः तेन मंत्रराजमहसा अनिशं प्रतिदिनं भक्त्या भक्तिपूर्वकं भारतीं सरस्वतीं देवीं आराधय–पूजय तन्मन्त्रजपपूर्वकं तस्या अनुचिन्तनं कुरु इति येन आराधनेन त्वं झटिति कवितायाः विताने–विस्तारे, सविता–सूर्यः कवितावितानसविता भूत्वा अद्वैतप्रबुद्धायसे अद्वितीयप्रबोधवान् भविष्यसि यथा सूर्यः अनन्यप्रकाशं विस्तारयति तथा त्वमपि भारतीप्रसादमासाद्य कवितानिर्माणे

सम्यगवबुद्धो भविष्यसीति । 'सूर्याश्वैर्मसजास्ततः सगुरवः, शार्दूलविक्रीडितम्' इति लक्षणलक्षितं शार्दूलविक्रीडितं छन्दः प्रकृते ॥ ११ ॥

**एवं तदीयाराधनप्रकारं प्रदर्श्य ततो रक्षणमभिलषन् स्तौति—**

**चञ्चच्चन्द्रमुखी प्रसिद्धमहिमा, स्वाच्छन्द्यराज्यप्रदा**
**नायासेन सुरासुरेश्वरगणे-रभ्यर्चिता भक्तितः ॥**
**देवी संस्तुतवैभवा मलयजा-लेपाङ्गरङ्गद्युतिः**
**सा मां पातु सरस्वती भगवती, त्रैलोक्यसंजीवनी ॥१२॥**

**व्याख्या**—चञ्चदिति=चंचन् चलायमानः चन्द्रः शशी मुखम् आस्यम् चलायमानो यश्चन्द्रः तस्य मुखमिव मुखं यस्याः सा चञ्चचन्द्रमुखी शरदिन्दुवदना इति यावत्, प्रसिद्धमहिमा–प्रसिद्धः दिगन्तेषु ख्यातः महिमा प्रभावो यस्याः सा प्रसिद्धमहिमा विश्वविख्यातानुभावा, स्वाच्छन्द्यराज्यप्रदा स्वाच्छन्द्यं स्वतंत्रतारूपम् राज्यम् साम्राज्यम् भेदादिनीतिचतुष्टययुक्तविभुविभूतिः स्वाच्छन्द्यराज्यस्य प्रकर्षेण दानशीला या सा स्वाच्छन्द्यराज्यप्रदा, अत एव नायासेनेति आयासः क्लेशः यत्नो वा तेन आयासेन न इति निषेधार्थकमव्ययम् तथा च आयासेन न किन्तु अनायासेन क्लेशेन विना, प्रमोदेनेति यावत्, भक्तितः भक्त्या स्वविशिष्टात्मानुकूलात्मीयवर्तनम् भक्तिः तया सुराः देवाः असुराः दैत्याः सुरविपक्षीभूताः तद्विरुद्धप्रकृतिकत्वात् यक्षराक्षसभूतपिशाचादय सुराश्च असुराश्च सुरासुराः तेषामीश्वराः शासनकर्तारः तेषां गणः संघातः तै सुरासुरेश्वरगणैः अर्चिता पूजिता

१ वैशिष्ट्यञ्च—स्वोत्कृष्टत्वसम्बन्धेन ।

प्रायो जगति स्वशत्रुसन्मानितं न कोऽपि सन्मानयति तथापि एषा उभयैरर्चितेति तस्या जगद्विलक्षणमाहात्म्यमभिव्यक्तम्, देवी दीव्यति क्रीडते इति देवः यदुक्तम् "दीव्यति क्रीडते यस्मा–द्रोचते द्योतते दिवि। तस्माद्देव इति प्रोक्तः" इति तद्देवशब्दात् 'गौरादिभ्यो मुख्यान्ङीः'। २। ४। ११। इति स्त्रियां ङीः संस्तुतवैभवा संस्तुताः स्तुतिपथं प्रापिताः वैभवाः अणिमादयः समृद्धयो यस्याः सा संस्तुतवैभवा, द्वितीयपादे उक्तं यत् 'सुरासुरेश्वरगणैरभ्यर्चितेति' अर्चनं तु जलचन्दनाद्यैर्भवतीति तथारूपां तामाह मलयजेति मलयजः चन्दनम् तस्य तद्भवत्वात् तस्य आलेपेन अङ्गे शरीरे समुत्पन्नो यो रङ्गः रागः तस्य या द्युतिः कान्तिः विद्यते यस्याः सा मलयजालेपाङ्गरङ्गद्युतिः, त्रैलोक्यसंजीवनी त्रैलोक्यं त्रयाणां लोकानां समाहारः त्रिलोकी ततः स्वार्थे ष्यण् त्रैलोक्यम् लोकत्रयम् स्वर्गमर्त्यपातालात्मकम् तस्य लक्षणया तद्वर्तिजीवजातस्य संजीवनी जीवनदात्री अथवा संजीवनी ओषधिविशेषः तस्या इव संजीवनकारिणी यथा संजीवनी मृतप्रायमुपजीवयति तथेयमपि चिच्चैतन्यविरहितान् चैतन्यमर्पयति इति भावः, भगवती ऐश्वर्यवती "ऐश्वर्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव, षण्णां भग इतीङ्गना" इति कोषः एतेनान्यस्मै विभवदातृत्वं सूचितम्, विभूतिमन्त एव विभूत्या अन्यान् विभूषयन्ति नतु अकिञ्चनाः स्वयंदरिद्रः कथं परानीश्वरीकर्त्तुमीश्वरः इति, सा जगद्विख्याता पूर्वपरामर्शकस्य तच्छब्दस्य प्रकृतेऽयोगात् प्रसिद्धार्थकोऽवसेयोऽत्र तच्छब्दः[1] जगद्विख्याततता चास्याः सुस्पष्टैव पूर्वप्रदर्शितविशेषणात्, सरस्वती तन्नामिका ब्राह्मीदेवी, मां पातु रक्षतु अज्ञानान्मामवतात् इति तत्त्वम् पूर्ववद्वृत्तम्॥ १२॥

१ प्रसिद्धार्थकस्तच्छब्दोयथा 'कलाचसाकान्तिमतीकलावतः' इत्यादौ

स्वकृतं सरस्वतीस्तोत्रमर्थवादमुखेनोपसंहरति—

७ ५ ६ ८ १ २ ३ ४
**स्तवनमेतदनेकगुणान्वितं पठति यो भविकः प्रमनाः प्रगे।**
९ १० ११ १२ १३ १४ १६ १५
**स सहसा मधुरैर्वचनामृतै-र्नृपगणानपि रञ्जयति स्फुटम्॥**

**व्याख्या**—स्तवनमिति=यः यः कश्चित् भविकः भव्यात्मा, भविकस्यैव सस्नेहं सरस्वती स्तोत्रपाठकरणात् न तु अभव्यस्य तथा लोकविनोदाय कृतेऽप्यभव्येन पाठे निष्फलस्तत्पाठः भावनाशून्यत्वात् अतो भव्य एवैतत्पाठकरणाधिकारी, सत्यपि भव्यस्याधिकारे सांसारीकचिन्ताचान्तचित्तविकलः सन् पठेत् तदा यथावस्थितं फलं नाप्नुयात् इत्याह प्रमना प्रसन्नचेताः सन् प्रहृष्टचित्तो भूत्वा इत्यर्थः मनः प्रसन्नता च प्रायः प्रातरेव भवति तदनन्तरं तु स्वस्वव्यापारविकलत्वान्नो भवतीति प्रातःसमयस्य पठनयोग्यतयाऽऽह प्रगे इति, प्रगे प्रभातकालबोधकमव्ययम् 'प्रगे प्रातः प्रभाते' इत्यमरः, अनेकगुणान्वितम् अनेके च ये गुणाः प्रसादमाधुर्यादयः काव्यगुणाः ज्ञानानन्दकौशल्यारोग्यनिर्भयत्वादिदातृत्वप्रमुखाश्च लोकगुणास्तैरन्वितम् युक्तम् अनेकगुणान्वितम्, एतद् पुरःस्थितम् इदमेतदोः प्रत्यक्षशक्तत्वात, स्तवनम् स्तूयतेऽनेनेति स्तवनम् स्तोत्रम्, पठति व्यक्तमुच्चारयति, यत्पदोपस्थापितामाकाङ्क्षांपूरयन्नाह स इति स यः पठति स नरः सहसा अकस्मात् नतु शनैः शनैः मधुरैः माधुर्यगुणशालिभिः मनोहरैः वचनामृतैः वचनं च तदमृतं चेति वचनामृतम् तैः उक्ति सुधाभिः यथाऽमृतपाने न केषामभाव (अरुचिः) तथैषां वचनश्रवणेऽपीत्यभिव्यक्तं वचनेऽमृतत्वम्, यद्यप्यमृताभेदेनैववचने माधुर्यस्य प्राप्तत्वात् पूर्वोक्तं मधुरैरितिविशेषणमनर्थकः

मिवप्रतिभाति तथापि येऽबुधजना अमृतं कीदृशं भवतीति न जानन्ते तान्निबोधाय अमृततोऽपि व्यक्तमाधुर्यस्य ख्यापनाय चेति न कोऽपि दोषः, नृपगणान् राजसमूहान् अपि किं पुनः प्राकृतजनान् स्फुटं प्रकटं यथा स्यात्तथा रञ्जयति विनोदयति स्वामिमुखं करोति, मिष्टवचनप्रयोगेन सर्वजनप्रियो भवतीतिभावः द्रुतविलम्बितम् छन्दः ॥ १३ ॥

## प्रशस्तिः ।

चरमजिनपतीर्थे शासनाधीश्वराणां
प्रथितविजयश्रीणां प्राप्तसज्ज्ञानश्रीणाम् ।
परमगुरुगुरूणां नेमिसूरीश्वराणां
जयति विमलप्राज्ये प्रौढस्याद्वादराज्ये ॥ १ ॥ मालिनी

श्रीमदाचार्यवर्याणां विजयामृतसूरिणाम् ।
प्रभावान्मुनिवर्यश्री-पुण्यविजयजिच्छिशुः ॥ २ ॥

धुरन्धरोमुनिर्नाम्ना वृत्तिं शिशुहितां व्यधात् ।
अनुभूतसिद्धसारस्वतो शिरपुरेपुरे ॥ ३ ॥ विशेषकम् ।

मुनिनिधिनिधानेन्दु-मितेऽब्दे वैषमासके ।
चन्द्रेऽह्नि चन्दशालायां राकायां रचिताहिता ॥ ४ ॥

परिशिष्ट २

# ॥ शब्दवृत्तिमीमांसा ॥

( विशेषतो व्यञ्जनाविचारः )

संकलयिता—मुनिश्री धुरन्धरविजयजी



**स्मृत्वा श्रीमन्महावीरं, सद्गुरूंश्च सरस्वतीम् ॥**
**शब्दवृत्तिमीमांसेयं, व्युत्पत्त्यर्थं वितन्यते ॥ १ ॥**

**वृत्तिस्वरूप–भेद–निरूपणम्—**

शब्दादर्थप्रत्यायने अर्थोपस्थितिद्वारा वृत्तिज्ञानमुपयुज्यत इति शाब्दिकार्थिकादयोऽनुमन्यन्ते । तत्र वृत्तिर्नाम शाब्दबोधौपयिकस्सम्बन्ध । सा च शक्ति लक्षणा व्यञ्जना चेति त्रिविधा ।

**शक्तिलक्षण समन्वयश्च—**

वृत्तिषु प्राधान्यात्प्रथम शक्तिस्वरूपम्, तच्चैवम्, यया सङ्केतितार्थस्य वृत्त्यन्तरासहयोगेन बोधो भवति साऽभिधापरनामधेया शक्ति । यथा घटशब्देन संकेतितस्य कम्बुग्रीवादिमदर्थस्य वृत्त्यन्तरासहायेन शक्त्या बोधो भवति । सङ्केतश्च जातिद्रव्यगुणक्रियासु गृह्यते ।

**शक्तिप्रकारास्तत्स्वरूपञ्च—**

रूढिर्योगो योगरूढिश्चेति शक्तिस्त्रिधा, तत्र शास्त्रकल्पितावयवार्थभानाभावे समुदयार्थनिरूपितबोधजनिका शक्ती रूढिः। यथा मणिनूपुरादौ। शास्त्रप्रकल्पितावयवार्थमात्रज्ञापिका शक्तिर्योग। यथा पाचकादौ। शास्त्रबोधितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिः। यथा पङ्कजादौ।

**शक्तिग्रहोपायवर्णनम्—**

**शक्तिग्रहश्च व्युत्पन्नवृद्धव्यवहारादिना भवति तदुक्तमभियुक्तैः,**

**शक्तिग्रहं व्याकरणोपमान-**
**कोशाप्तवाक्याद्व्यवहारतश्च ॥**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति,**
**सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ १ ॥ इति ।**

एतेषा मध्ये प्राधान्यं व्यवहारव्याकरणयोरेव ताभ्यामेव प्रथमत शक्तिग्रहान्नोपमानादिना, एकत्र व्यवहारेण व्याकरणेन वा शक्तिग्रहे संजातेऽन्यत्रोपमानादिना शक्तिग्रहो भवतीति भाव ।

**शक्तिनियामकाः—**

नानार्थकेषु शब्देषु सत्यपि नानार्थबोधिका शक्ति संयोगादिभि एकस्मिन्नेवार्थे नियम्यते। उक्तञ्च हरिणा।

**संयोगो विप्रयोगश्च, साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं, शब्दस्यान्यस्य सन्निधिः ॥ १ ॥**

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ २ ॥ इति ।**

यथा सवत्सा इत्युक्ते संयोगेन धेनुरेव प्रतीयते न त्वन्या । , एवं रीत्याऽन्यस्याप्युदाहरणं स्वयमेवोह्यमिति । इयञ्च शक्ति साधुशब्देष्विवापभ्रंशशब्देष्वपि वर्तते शक्तिग्राहकशिरोमणेर्व्यवहारस्योभयत्र तुल्यत्वात् । विषयेऽस्मिन् सन्ति वादिनां विविधविचारपथा विस्तरभयान्नेह प्रदर्श्यंत इति ।

## इति शक्तिविचारः ।

---

## अथ लक्षणाविचारः

**लक्षणालक्षणं समन्वयश्च—**

तात्पर्यार्थविषयीभूतवाक्यार्थबोधाभावनिबन्धनत्वे सति रूढिप्रयोजनान्यतरप्रयोज्यशक्यार्थसम्बन्धवत्तदतिरिक्तार्थप्रतिपादिका—लक्षणानाम्नी द्वितीया वृत्ति । यथा गङ्गायां घोष , अत्र तात्पर्यार्थविषयीभूततटाधिकरणकघोषरूपवाक्यार्थबोधाभावनिबन्धन—शैत्यपावनत्वरूपप्रयोजनप्रयोज्य—प्रवाहरूपशक्यार्थनिरूपितसामीप्यसम्बन्धवच्छक्यार्थभिन्नतटरूपार्थस्य गङ्गा पदाल्लक्षणया बोधो भवति ।

**लक्षणाया भेदास्तत्स्वरूपञ्च—**

इयञ्च लक्षणा गौणी शुद्धा चेति द्विप्रकारा, तत्र स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी तदतिरिक्तसम्बन्धेन तदर्थप्रतिपादिका च शुद्धा, गौणी यथा गौर्वाहीकः, अत्र जाड्यमान्द्यरूपसादृश्यसम्बन्धाद् गोशब्दस्य तत्सादृश्याधिकरणे वाहीकेऽर्थे लक्षणा। शुद्धा यथा गङ्गायां घोषः अत्र सादृश्यभिन्नसामीप्यसम्बन्धाद् गङ्गाशब्दस्य तीरे लक्षणा। प्रकारान्तरेणापि लक्षणा द्विविधा अजहत्स्वार्था जहत्स्वार्था चेति, तत्र स्वार्थसहितपरार्थाभिधायिका प्रथमा तदुदाहरणम्, काकेभ्यो दधि रक्ष्यताम्, अत्र दध्युपघातकत्वरूपसामान्यधर्मसम्बन्धात्काकसहितसर्वदध्युपघातकबोधः, स्वार्थपरित्यागेनेतरार्थप्रतिपादिका द्वितीया यथा गां वाहीकं पाठय अत्र लक्षणया गोशब्देन गोरूपार्थरहितस्यैव वाहीकरूपार्थस्य बोधस्तेन तस्यैव पाठनक्रियान्वयित्वम्।

**लक्षणानिमित्तानि—**

**तात्स्थ्यादिभिर्निमित्तैः प्रायो लक्ष्यते लक्षणा. उक्तञ्चाचार्यैः—**

**तात्स्थ्यात्तथैव ताद्धर्म्यात्, तत्सामीप्यात्तथैव च।**
**तत्साहचर्यात्तादर्थ्याज्, ज्ञेया वै लक्षणा बुधैः॥ इति।**

क्रमेणोदाहरणम्, मञ्चा हसन्ति, अत्र तात्स्थ्यात् मञ्चस्था जना हसन्तीत्यर्थः। सिंहो माणवकः, अत्र ताद्धर्म्यात् सिंहधर्मवच्छूरो माणवक इत्यर्थः। गङ्गायां घोषः, अत्र तत्सामीप्यात् गङ्गासमीपे तीरे घोषः इत्यर्थः। यष्टीः प्रवे-

शय, अत्र तत्साहचर्याद् यष्टीसहचरान्नरान् प्रवेशयेत्यर्थः । स्थूणा इन्द्र, अत्र तादर्थ्यात्, इन्द्रपूजार्था स्थूणा(स्तम्भः) इन्द्रः इति भावः ।

## जहदजहल्लक्षणा-लक्षितलक्षणा-स्वरूपम्—

विशिष्टार्थबोधकशब्दस्य पदार्थैकदेशे लक्षणाया जहदजहल्लक्षणेति व्यवहरन्ति वृद्धा । यथा तत्त्वमसीत्यत्र सर्वज्ञत्वविशिष्टचैतन्यबोधकस्य तत्पदस्य स्वार्थैकदेशे चैतन्यमात्रे लक्षणायां एवं अल्पज्ञत्वविशिष्टचैतन्यबोधकत्वं पदस्य स्वार्थैकदेशे चैतन्यमात्रेलक्षणाया सर्वज्ञत्वाल्पज्ञत्वरहितयोश्चैतन्यमात्रयोस्तत्त्वं पदार्थयोरभेदान्वयः । यत्र शक्यार्थस्य परम्परा रूपा लक्षणा सा लक्षितलक्षणेति व्यवह्रियते यथा द्विरेफपदे अत्र रेफद्वयसम्बन्धो भ्रमरपदे भवति भ्रमरपदस्य च भ्रमररुपार्थे सम्बन्ध, इति लक्षितलक्षणा अस्याश्च पूर्वोक्तायां जहत्स्वार्थायामेवान्तर्भाव ॥

## अन्वयानुपपत्तिलक्षणाबीजखण्डनम्—

लक्षणाया ज्ञापकं तात्पर्यानुपपत्तिप्रतिसन्धानमेव न त्वन्यान्वयानुपपत्तिप्रतिसन्धानम्, तस्य काकेभ्यो दधि रक्ष्यतामित्यादावभावात्, दधिरक्षणान्वयस्य काके नानुपपत्तेस्तात्पर्यानुपपत्तिस्तु व्यक्तैव एतच्च तात्पर्यार्थविषयीभूतवाक्यार्थबोधाभावनिबन्धनत्वे सतीति विशेषणदानेन लक्षणालक्षणे सूचितमेवेति ॥

साहित्यकारमते अशीतिप्रकारा लक्षणा तासां लक्षणोदाहरणे साहित्यग्रन्थादेवावगन्तव्ये विस्तरभयान्नेह प्रतन्यते ।

## इति लक्षणाविचारः ।

# अथ व्यञ्जनाविचारः ।

**व्यञ्जनालक्षणं-समन्वयश्च—**

अभिधा—लक्षणा—तात्पर्याख्यासु तिसृषु वृत्तिषु स्वस्वमर्थं बोधयित्वा उपक्षीणासु यया वृत्त्या शक्य—लक्ष्य—तात्पर्यार्थभिन्नोऽर्थः प्रतीयते सा शब्दस्य अर्थस्य च वृत्तिः, व्यञ्जना नाम्नी । यथा गङ्गायां घोषः, इत्यादौ प्रवाहाद्यर्थबोधनादभिधायामुपक्षीणायां-तटाद्यर्थबोधनाल्लक्षणायां विरतायां, तटाधिकरणकघोषः, इत्थं सम्बन्धबोधनात्तात्पर्याख्यायां स्थितायां व्यञ्जनया शक्य—लक्ष्य—तात्पर्यार्थभिन्नः, शैत्य—पावनत्वाद्यतिशयादिर्बोध्यते ।

**व्यञ्जनापूर्वपक्षः—**

ननु यथा इषो दीर्घदीर्घतरव्यापारो भवति तथैवाभिधाया अपि दीर्घदीर्घतरव्यापारमाश्रित्य शक्यव्यङ्ग्ययोरुभयोरर्थयोः क्लृप्ताभिधयैव वृत्त्योपस्थितिसम्भवः ।

**अथवा—"तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।**
**यावत्कार्यप्रसारित्वात्-तात्पर्यं न तुलाधृतम् ॥"**

इत्युक्तदिशा तात्पर्यवृत्त्यैव व्यङ्ग्यार्थस्याप्युपस्थितिसम्भव एवञ्च किमिति व्यञ्जनोपास्येति चेन्न ।

**व्यञ्जनास्थापनम्**—

'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव.' इत्यभियुक्तोक्तत्वात्, अयं भावः शब्दबुद्धिकर्मणां तृतीयक्षणविनाश्यत्वात् शब्दो घटादि· बुद्धि प्रत्यक्षादिः, कर्म यागादि सकृत् स्वस्वविषयप्रतिपादनान्तरमुपरम्य—उपक्षीणीभूयेति यावत्—अगोचरताङ्गता न पुन विषय प्रतिपादयन्ति—उपक्षीणत्वेनायोग्यत्वात्—यथा सकृदुच्चरितो घटशब्द· सकृदेव कम्बुग्रीवादिमन्तमर्थमभिधायोपक्षीणो न पुनस्तमर्थं बोधयति—अत एव 'सकृदुच्चरित. शब्द सकृदेवार्थं गमयती'त्युद्घोष एवं वह्निमान् धूमादित्यादौ सकृद्धूमप्रत्यक्षं सकृदेवानुमितिं जनयति नो पुनरपि उपक्षीणत्वात् । एवमेव सकृदनुष्ठितो पूजादि याग· सकृदेव स्वर्गजननसमर्थमदृष्टमुत्पाद्य नष्ट· पुनरदृष्टं नोत्पादयतीति सम्प्रदायः ।

**शाब्दिकमतमनुसृत्य 'शब्दबुद्धी'त्यस्यार्थः**—

न च तृतीयक्षणनाश्यत्वाच्छब्दस्योपक्षीणत्वेऽपि तद्गता वृत्ति· स्थास्यतीति शङ्क्यम्—धर्मिणामभावे धर्मणा सुतरामभावात्, न च शाब्दिकादीना मते शब्दस्य नित्यत्वान्नाशाभावात् पुनरभिधाया एव दीर्घदीर्घतरव्यापारमाश्रित्य तात्पर्येण वा व्यङ्ग्यार्थस्योपस्थितिसम्भवे तदवस्थमेव वैयर्थ्यं व्यञ्जनाया इति वाच्यम्—तेषा मतेऽपि आविर्भावतिरोभावयोरङ्गीकारात्, अत एव "प्रत्युच्चारणं शब्दो भिद्यते" इति प्रवादः सङ्गच्छते । अथवा वैयाकरणमतेऽभियुक्तोक्तवाक्ये विरम्येत्यस्य तिरोभूयेत्यर्थ· शब्दाना तिरोभावे तद्गतवृत्तीनामपि तिरोभाव एवञ्च तेषामपि मते नाभिधानधारापत्तिरत एवैतन्मतेऽपि 'सकृदुच्चरित· शब्द सकृदेवार्थं गमयती'ति सुष्ठु सङ्गच्छते यद्वा 'शब्दबुद्धी' त्यस्यायमर्थ., तथाहि शब्दबुद्धिः,

शब्दज्ञानम्—कर्म—व्यापार· स्वजन्यत्वे स्वजन्यजनकत्वरूपः यासां ता अभिधा-लक्षणा—तात्पर्याख्यास्तासां स्वमर्थं बोधयित्वोपरम्य व्यापाराभावः पुनर्बोधनसामर्थ्याभाव इति तथा च शाब्दिकादीनामपि नो विप्रतिपत्तिलेश । वस्तुतस्तु शब्दबुद्धिकर्मणां किञ्चिदर्थं बोधयित्वा विरम्य विश्रान्तिं प्राप्य पुन. व्यापाराभाव·, यत्किञ्चिदर्थबोधनरूपव्यापाराभाव इत्येवार्थः शब्दमर्यादालभ्य प्रतिभाति ।

## युक्त्या व्यञ्जनास्थापनम्—

ननु एतदर्थेऽनेन वचनेन शब्दबुद्धिकर्मणां पुनर्व्यापाराभावबोधने युक्त्यभावात् प्रतिवादिनामिदं वचः श्रद्धेयभूतं न स्यादपि चेदं वचनं न राजशासनं येन सर्वैरङ्गीकृतं भवेत् किन्तु—कस्यचिद्वचनमात्रमिति न स्वीकुर्युः प्रतिवादिनः इति चेत्, न, शब्दबुद्धिकर्मणामिति वचनमनादृत्याभिधया तात्पर्येण वा व्यङ्ग्यार्थस्यापि ज्ञानाङ्गीकारे तुल्यन्यायेन लक्ष्यार्थस्याप्यभिधया तात्पर्येण वा ज्ञानसम्भवेन लक्षणाया अपि वृत्तेर्वैयर्थ्यप्रसङ्गात्, न चेष्टापत्तिः पुत्रस्ते जात· कन्या ते गर्भिणीत्यादौ मुखप्रसादमुखमालिन्याभ्यामनुमितयोर्हर्षशोकयोरपि अभिधाया अतिदीर्घतरव्यापारमाश्रित्य तथैव तुल्यन्यायेन बोध्यत्वापत्ते न च तदपीष्टम्, शाब्द बोधानां विनियमापत्ते प्राचामभिधालक्षणाप्रमुखवृत्तिविभागस्योन्मत्तप्रलापत्वापत्तेश्च ननु अभिधादीनां विरम्य व्यापाराभावेऽपि युगपदेव तात्पर्यवृत्त्याविभावादिसंसर्गस्य व्यङ्ग्यत्वेनाभिमतस्य वस्त्वलङ्काररसादेश्च बोधसम्भवेन व्यञ्जनाव्यर्थैवेति चेन्नैवम्, विभावादिसंसर्गरसयो· कार्यकारणभावाङ्गीकारादुक्तञ्च नाट्यसूत्रसूत्रधारेण मुनिना—'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति' इति सहभावे च सव्येतरविषाणयोरिव कुत. कार्यकारणभाव, पौर्वापर्यविपर्ययात् ।

**अनुमानतो लक्षणातो वा न वैयर्थ्यं व्यञ्जनायाः—**

यत्तु केनचिदुक्तं पौरुषेय गामानयेत्यादिकं लौकिकम् अपौरुषेयं स्वर्गकामो यजेतेत्यादिकं वैदिकम् सर्वं वाक्यं कार्यपरम् , अन्यथानुपादेयत्वादुन्मत्तप्रलपितमिवाप्रमाणं स्यात् तथा चोक्त जैमिनिना 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना'मिति एवञ्च शून्यं वासगृहमित्यादिकाव्यशब्दानामन्वयव्यतिरेकाभ्यां निरतिशयसुखास्वाद विना श्रोतृकर्त्रो प्रवृत्त्यौपयिकप्रयोजनान्तराऽज्ञानान्निरतिशयसुखास्वाद एव कार्यत्वेन निश्चीयते तथा च काव्यशब्दा रसादिरुपव्यङ्ग्यार्थबोधकास्तद् बोधनेच्छयोच्चरितत्वादित्यनुमितिरेवञ्च तात्पर्यद्वारैव व्यङ्ग्यार्थानामपि अनुमानेन बोधसम्भवाद् व्यञ्जनावृत्तिस्तुरीया किमिति कल्पनीयेति अत्रेदं वक्तव्यम् अतत्परत्वे अनुपादेयत्वादित्यनेन तत्परत्वे उपादेयत्वादिति आयातं तत्र तत्परत्वम् किं नाम तदर्थत्वं तात्पर्याख्यवृत्त्या तद्बोधकत्वं वा आद्ये न कापि विप्रतिपत्तिः व्यङ्ग्यत्वेऽपि रसादीना तदर्थत्वानपायात् द्वितीये अभिहितान्वयवादिभिरङ्गीकृता तात्पर्याख्यावृत्तिरियमुत तदन्या, प्रथमे शब्दबुद्धीति दत्त एवोत्तर· द्वितीये नाममात्रे विवाद·, रसादीना तात्पर्यग्राह्यववादिमतेऽपि तुरीयवृत्तिसिद्धेरस्मन्मते सा व्यञ्जनया व्यवह्रियते तन्मते तात्पर्येणेति तत्रापि व्यङ्ग्यार्थबोधिकाया वृत्ते· व्यञ्जनेति नाम्न एवौचित्यं सन्देहानवकाशादित्यस्मन्मत एव श्रेय इति भाव ।
न च लक्षणयापि व्यङ्ग्यार्थस्य बोधो भवितुमर्हति, तीरादिरुपलक्ष्यार्थमात्रे परिक्षीणायास्तस्या व्यङ्ग्यार्थबोधने सामर्थ्यविरहात् ननु व्यङ्ग्यार्थस्थलेषु सर्वत्रैव व्यङ्ग्यानामभिधावृत्त्या लक्षणावृत्त्या वा अनुरणनस्वरुपमनुव्यवसायात्मकं ज्ञानं स्यादिति चेन्न य पदार्थ स्वानुभवात्पूर्वमपि येन केनचित्प्रत्यक्षादिना प्रमाणेन

सिद्धस्तमेव पदार्थमभिधा लक्षणा च बोधयतीति नियमाद् रसादीनां स्वानुभवात् पूर्वमभावेनाभिधालक्षणाभ्यां रसादीनां बोधासम्भवात् इति व्यञ्जना शक्तिलक्षणादितो भिन्नैव ।

**बोद्धृप्रमुखभेदाद् भिन्ना व्यञ्जना—**

अभिधादिवृत्तिभ्यो व्यञ्जनाया भेदं साक्षात् प्रसाध्येदानीमभिधेयाद्यर्थाद् व्यङ्ग्यार्थस्य भेदप्रतिपादनद्वारा ताभ्यो वृत्तिभ्यो व्यञ्जनाया भेदः प्रतिपाद्यते,

**बोद्धृ (१) स्वरूप (२) सङ्ख्या (३)-**
**निमित्त(४) कार्य(५) प्रतीति(६) कालानाम्(७)॥**
**आश्रय (८) विषयादीनां (९),**
**भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥ २ ॥**

१ **बोद्धृभेदः**—पदप्रकृतिप्रत्ययतदर्थमात्रावगमनिपुणैः शाब्दिकैः वाच्यार्थः केवलमवबुध्यते, व्यङ्ग्यार्थस्तु काव्यमर्मज्ञसहृदयैरेव ज्ञायते इति वाच्यार्थव्यङ्ग्यार्थयोर्बोद्धृभेदः । २ **स्वरूपभेदः**–'भ्रमधार्मिक' इत्यादौ वाच्यतया 'भ्रम' इति विधिरुपोऽर्थो भासते क्वचिच्च 'निःशेषच्युतचन्दन'मित्यादौ 'तस्याधमस्यान्तिकं न गतासो'ति निषेधरुपोऽर्थो वाच्यतयाऽवबुध्यते, व्यङ्ग्यतया च 'तदन्तिकमेव रन्तुं गतासी'ति वाच्यार्थव्यङ्ग्यार्थयोः स्वरुपभेदः । ३ **संख्याभेदः**—'गतोऽस्तमर्क'इत्यादौ 'सूर्यस्यास्तगमनरुप'एक एव वाच्यार्थः 'प्रतीयते, व्यङ्ग्यार्थस्तु बोद्धृ–वक्तृ–भेदादनेकविधस्तथाहि क्वचिदभिसारिकारुपबोद्धृस्थले 'कान्तमभिसर' इति. क्वचिद्भृत्यबोद्धृस्थले 'वने विमुक्ता गावो

गोष्ठे निरुध्यन्ताम्' इति क्वचिद्विरहिणीरुपस्थले सखीरुपवक्तृस्थले वा, नायकस्यायमागमनावसर ' इति. गुरुरूपवक्तृस्थले 'इदानीमावश्यकं समाचर' इति नगरद्वारपालश्चोद्धृस्थले 'कपाट पिधेहि' इति. एवमनेकविधो व्यङ्ग्यार्थ इति सङ्ख्याभेद ४ **निमित्तभेदः**—वाच्यार्थ शब्दोच्चारणमात्रवेद्य , व्यङ्ग्यार्थस्तु सातिशयप्रतिभानैर्मल्यादिना संवेद्य , इति निमित्तभेद **कार्यभेदः**—वाच्यार्थो विषयतया केवलं स्वज्ञानमेव जनयति, व्यङ्ग्यार्थस्तु स्वज्ञानं चमत्कारञ्च संपादयतीति कार्यभेद । ६ **प्रतीतिभेदः**—वाच्यार्थप्रतीतौ केवलं शाब्दबोधः व्यङ्ग्यार्थप्रतीतौ तु चेतश्चमत्कारिताऽपीति प्रतीतिभेद ७ **कालभेदः**—वाच्यार्थबोध पूर्वं भवति पश्चाच्च व्यङ्ग्यार्थबोध इति कालभेद· ८ **आश्रयभेदः**—वाच्यार्थस्य शब्दमात्राश्रयत्वेन, व्यङ्ग्यार्थस्य शब्दतदेकदेश-तदर्थ-वर्ण-संघटनाश्रयत्वेनाश्रयभेद· ९ **विषयभेदः**—'कस्य न वा भवति रोषो' इत्यादौ वाच्यार्थस्य विषय सखी, व्यङ्ग्यार्थस्य च विषयस्तत्कान्त इति विषयभेद अनयैव दिशा लक्ष्यतात्पर्यार्थतोऽपि व्यङ्ग्यार्थस्य भेदोऽवगन्तव्य । एवञ्च सिद्धे भेदे व्यङ्ग्यार्थस्य शक्याद्यर्थत , व्यञ्जनाऽपि-अभिधादितो भिन्नैवेति सिद्धमेव ।

### अनुमानतो व्यञ्जनाविघातस्तदुद्धारश्च—

ननु यथा वह्निव्याप्यो धूमः पर्वतवृत्तिरिति परामर्शानन्तरं पर्वतो, वह्निमान्, धूमादित्यनुमितिर्भवति, तथैव रसादिव्याप्यो विभावादि· काव्यवृत्तिरिति परामर्शानन्तरं काव्यं, रसादिमत्, विभावादिमत्वादित्यनुमानेनैव रसादिज्ञानसम्भवे तदर्थं व्यञ्जनाङ्गीकरणं निरर्थकमेव अथ विभावादे रसादिव्याप्यत्वमेव कथमिति चेदित्थम्–यथा दण्डचक्रादिव्यापारेण मृत्तिका घटरूपेण परिणमते तथैव विभा-

वादिप्रतीतय एव रत्याद्यपूर्वसमावेशेन चमत्कुर्वाणा रसाद्यात्मकप्रतीतिरूपतया परिणमन्ते, ततश्च घटानां मृत्तिका इव रसाद्यात्मकप्रतीतीनां विभावादय कारणानि सम्भवन्ति, आशुभावितया च न संलक्ष्यते कारणत्वं विभावादिषु. एवञ्च साहचर्यनियमरूपव्याप्तिसत्त्वाद् रसादिव्याप्यत्वं विभावादिष्वायातमिति चेदत्र विरोधः, शृणु, त्वया यो रसोऽनुमानेन साध्यते सो रस किं श्रव्य–दृश्य–काव्यजनितविभावादिज्ञानानुमितरामादिगतसीताविषयकज्ञानस्वरूप उत रामादिगतरागादिविभावनया भावुकैः प्रतीयमान स्वप्रकाशानन्द. । आद्ये नो नो विरोध, काव्यं, रामादिविषयकरागादिसूचकं, सीतादिविषयकरत्यादिज्ञापकत्वात्, इति अनुमानस्य हेत्वाभासत्वाभावाद् व्याप्तिज्ञानसम्भवेन सङ्गच्छमानत्वात्. किन्तु अनुमानलभ्यं रामादिगतरागादिज्ञानं नाङ्गीक्रियतेऽस्माभी रसत्वेनेति भेद । स्वप्रकाशानन्दचिन्मय एव रसोऽस्माकमभिमत, अयमेव रसस्सर्वै रसतयाङ्गीकृत, 'विनायकं प्रकुर्वाणो रचयामास वानरम्' इतिवत्त्वया तु रसमनुमानेन साधयता साधितोऽरस एव । यदि त्वया काव्ये रसादिमत्त्वमनुमानेन साध्यते तदा हेत्वाभासदोषग्रस्तं तदनुमानम् । तथाहि काव्य, रसादिमत्, विभावादिमत्त्वात्, अत्र ह्रदो, द्रव्यं, धूमवत्त्वाद्, इतिवद्धेतुतावच्छेदकसमवायसम्बन्धेन हेतोर्विभावादिप्रतीते सभ्यवृत्तित्वेन काव्यरूपपक्षेऽभावात् स्वरूपासिद्धिरूप हेत्वाभासः । तथा साध्यतावच्छेदकसमवायसम्बन्धेन साध्यस्य रसादेरपि सभ्यवृत्तित्वेन काव्यरूपपक्षे वृत्तित्वाभावात् उत्पत्तिकालीनो घटो, गन्धवान्, पृथवीत्वाद्, इतिवद् बाधरूपहेत्वाभासस्तथाच बाधेन हेत्वाभासेन परामर्शप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धाद् स्वरूपासिद्ध्या साक्षादनुमितिप्रतिबन्धान्नानुमित्या रससिद्धि. । केचित्त्वित्थं वदन्ति विभावादिहेतुना स्वप्रकाशान्दरूपरसस्यानुमितिर्न भवितुमर्हति श्रोत्रियजरन्मीमां-

सकादीनां विभावादिबोधरूपहेतुसत्त्वेऽपि स्वप्रकाशानन्दरूपरसानुत्पत्तिदर्शनात् साध्यविरहेण साध्यानधिकरण–तादृशश्रोत्रियादिजन–वृत्तित्वस्य व्यभिचारस्य हेतौ सत्त्वात् व्याप्तिग्रहाभावेन नानुमानेन रसानुभवसम्भव इति पूर्वोक्तद्वितीय-कल्पोऽप्यपास्त एव ।

अथ विभावनादिव्यापारभागित्वे सति विभावादिबोधस्यैव हेतुत्वेन स्वीकारात् न व्यभिचारस्तादृशश्रोत्रियसभ्यसमाजे विभावादिबोधमात्रस्य सत्त्वेऽपि विभावनादिव्यापारभागित्वाभावात्, तथा च विभावनादिव्यापारभागित्वविशिष्ट-विभावादिबोधस्तादृशस्वप्रकाशानन्दरूपरसाद्याविर्भावव्याप्य इति व्याप्तिग्रहः सुलभः । एवं समेषां सामाजिकसभ्यानाम् 'अहं तादृगरसाद्याविर्भावव्याप्य-तादृशविभावादिबोधवान्' इति व्याप्तिविशिष्टपक्षधर्मताग्रहोऽपि निर्बाधः । तथा व्यञ्जनावृत्तिमङ्गीकुर्वतामपि वाच्यादितृतयभिन्नार्थस्य व्यञ्जनया बोधे शब्दबोधादिकारणकलापरूपसामग्री या प्रधानतयाऽभिमता सैव सामग्री अनु-मितिवादिनामपि रसाद्यनुमापकत्वेनेष्टैवेति चेत्सत्यम् ।

एतादृशानुमानमपि व्यञ्जनावादिनामस्माकं न विरुद्धम्, अस्माभिरपि तादृशानुमानस्य स्वीकृतत्वात्, किन्तु न ह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्मदभिमता, परन्तु स्वस्वरूपेण प्रकाशमात्रेण विषयीकृतो निरन्तरानन्दातिशयः आस्वाद्यत्वे-नाभिमतोऽस्माकम् । तथा च तादृशानुमितेरास्वाद्यत्वास्वीकारेण साधनेच्छा-विषयीभूतात् स्वप्रकाशानन्दातिशयरूपरसाद्भिन्नार्थस्यैव तादृशरसाद्याविर्भावस्या-नुमानान्निरुक्तहेतोर्भिन्नार्थसाधकतया दुष्टता स्पष्टैव ।

अपि च गङ्गायां घोष इत्यादौ सर्वत्र शैत्यपावनत्वादिप्रतीतीः सहृदयान व्याप्तिपक्षधर्मताज्ञानमन्तरैव व्यञ्जनयाऽनुभूयमानाऽपलपितुमशक्या। सर्वत्र व्याप्ति पक्षधर्मताकल्पने गौरवात्, शाब्दबोधादिस्थले योग्यतादिसहकृतशब्दश्रवण मात्रेणैव व्यञ्जनादिवक्तृवैशिष्टयादिमाहात्म्यसाचिव्येन जायमाने शाब्दबो लाघवमन्वेषयतां तार्किकाणाम् अनुमानजनकाननुभूयमानव्याप्त्यादिकल्पने विप रीतमेव गौरवमापततीत्यकामेनापि सर्वैर्व्यञ्जनवृत्तिरास्थेयेति।

शाब्दबोधे प्रवृत्तानां, बुधानां हर्षहेतवे।
निर्दुष्टा शब्दवृत्तीनां, मीमांसा जयताच्चिरम् ॥ १ ॥



# विशुद्धिकरणपत्रम्

## प्रथमप्रमितौ

| पृष्ठम् | पङ्क्ति. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ११ | वर्योऽमृ | वर्यामृ |
| २ | १३ | नोपयिक | नौपयिक |
| २ | १५ | योगिकी | योगिनी |
| २ | १६ | निरुप्यते | निरूप्यते |
| २ | २० | दर्श्यने | दर्श्यते |
| ३ | १९ | गिद्ध | सिद्ध |
| ५ | २० | पारिणा | पारीणा |
| ६ | ७ | उन | ऊन |
| ६ | १३ | वोध्यश्च | बोध्यश्च |
| ६ | १६ | कुरुणा | कुरूणा |
| ६ | १७ | माधेन | माघेन |
| ६ | १९ | गगीनां | गणिनां |
| ७ | ५ | भक्तमा | भक्ताम |
| ७ | ८ | विर्वृद्धये | विवृद्धये |
| ७ | २१ | विशुद्धि | विशुद्धि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | २ | वृर्त्या | वृत्त्या |
| ८ | ८ | परावृर्त्या | परावृत्त्या |
| ८ | ९ | ऋपभ॰ | ऋपभ |
| ८ | १२ | नाशन्न | नाशयन्न |
| ८ | १४ | घोपणा | घोषणा |

## द्वितीयप्रमितौ

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | ७ | हस्व | ह्रस्व |
| ९ | १७ | गीतमिति | गीतिमिति |
| ९ | १९ | जगवन्धो | जनबन्धो |
| ९ | २० | मुद्वर | मुद्गर |

११ पृष्ठे सो सो इति यत्र वर्तते तत्र स स इति शोध्यम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | ८ | श्चिन्हं | श्चिह्नं |
| १२ | ५ | एन्द्रीं | ऐन्द्रीं |
| १२ | १५ | एन्द्रींश्रि | ऐन्द्रींश्रि |
| १२ | १५ | यनाभि | यंनाभि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४ | ५ | वदात्त | वदात |
| १६ | १६ | विदन्तो | विन्दन्तो |
| १६ | १९ | जगपा | जगत्पा |
| १६ | २३ | ‖ऽ | ।ऽ। |
| १८ | १३ | गुरू | गुरु |
| १९ | ६ | वृतम् | वृत्तम् |
| १९ | ८ | गुरू | गुरु |
| २० | १० | चतुभिः | चतुर्भिः |
| २१ | ११ | गरू | गुरु |
| २१ | १४ | प्रातद् | प्रातर्द |
| २१ | १५ | रंचितः | राञ्चितः |
| २१ | १६ | पद्मन | पद्म |
| २१ | १६ | रस्रार | रसा |
| २१ | १७ | विजयतात् | विजयतां |
| २२ | ७ | भुमि | भूमि |

## तृतीयप्रमित्याम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | ३ | करूण | करुण |
| २७ | ४ | ऽद्भूत | ऽद्भुत |
| २८ | ११ | करण | करुण |
| २९ | ८ | वीरस | वीररसः |
| २९ | ११ | यद्दिजा | यद्द्विजा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३० | २ | लङ्केश्वर | लङ्‌केश्वर |
| ३० | १९ | विंरोधीः | विरोधी |
| ३० | २० | विरोधीः | विरोधी |
| ३२ | २ | कादंम्वे | कादम्वे |
| ३२ | ११ | वर्जिंतः | वर्जितः |
| ३२ | १२ | सिद्धि | सिद्ध्रि |
| ३४ | १९ | कार | करि |
| ३५ | ९ | रावृत्त | रावृत |
| ३८ | ९ | मृद्दिका | मृद्वीका |
| ३९ | १९ | चार्ययति | चार्पयति |
| ४१ | १४ | वस्तृ | वक्तृ |
| ४१ | १४ | सिद्धल | सिद्धाल |

## चतुर्थप्रमितौ

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४३ | २ | र्थाप्रमिति | र्थप्रमितिः |
| ४५ | ६ | रुत्तस | रुत्तंस |
| ४७ | ९ | प्रसिद्यतु | प्रसीदतु |
| ४७ | १७ | च | क च |
| ५२ | ११ | विषभा | विषमा |
| ५३ | ३ | घनके | घनेक |
| ५३ | ५ | शृङ्गार | शृङ्गार |
| ५३ | १३ | भगयतोः | भगवतोः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५५ | २ | व्यज्जिका | व्यञ्जिका |
| ५५ | ४ | मेघया | मेधया |
| ५५ | १३ | वघ्घा | बद्धा |
| ५६ | ९ | त्रिर्ण | वर्ण |
| ६१ | ५ | श्चकै | च्चकै |
| ६१ | १७ | निन्हव | निह्नव |
| ६२ | १२ | ध्वंसन | ध्वसन |
| ६२ | १९ | भिंनौ | भिन्नौ |
| ६४ | १९ | सत्वे | सत्त्वे |

पञ्चमप्रमित्याम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६८ | २ | माप्रमितिः | मप्रमितिः |
| ६८ | ४ | पंचमा | पञ्चमी |
| ६९ | २ | तत्व | तत्त्व |
| ७० | ५ | घूली | घूलि |
| ७१ | १ | चतुर्थी | पञ्चमी |
| ७१ | १३ | रुर्व्वे | रूर्ध्वे |
| ७२ | ५ | मियिवान् | मीयिवान् |
| ७२ | १४ | द्रष्टि | दृष्टि |
| ७२ | १४ | सत्व | सत्त्व |
| ७२ | १५ | कैमारके | कौमारके |
| ७३ | ५ | वाप्या | वाप्यो |
| ७३ | १० | सरत्य | सरित्य |

| पृष्ठम् | पङ्क्ति· | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७४ | ४ | विक्रमो | विक्रमौ |
| ७६ | ३ | सभ्रा | संभ्रमा |
| ७६ | ७ | खो | रवो |
| ७६ | १० | सान्द्रत्वं | सान्द्रत्वं |
| ७६ | ११ | णि शंक | नि शङ्क |
| ७६ | १५ | विश्व | वश्वि |

प्रथमपरिशिष्टे

| पृष्ठम् | पङ्क्ति· | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८० | २३ | प्रति | हंसंप्रति |
| ८१ | ४ | तता | भूता. |
| ८१ | ४ | तमि | भूमि |
| ८१ | ५ | ” | ” |
| ८१ | ९ | तक्तस्य | सूक्तस्य |
| ८१ | ९ | तमि | भूमि |
| ८१ | १३ | तचितम् | सूचितम् |
| ८२ | ५ | तदुर्ध्वे | तदूर्ध्वे |
| ८४ | १५ | तिर्यन्न | तिर्यङ्न |
| ८४ | १६ | दुष्कृतम् | दुष्कृतम् |
| ८५ | १७ | तय· | यत· |
| ८७ | १६ | क्रिन्त | किन्तु |
| ८७ | १८ | त्न ततः | त्नत· |
| ८८ | ३ | भक्तात | भक्तानां |
| ८८ | ८ | तत | श्रुत |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८८ | ११ | भीतीः | भीतिः |
| ८९ | २ | निर्यान्तीं | निर्यान्तीं |
| ९१ | १४ | सिद्धि | सिद्धि |
| ९२ | १५ | भूत्या | भूत्वा |
| ९३ | १६ | स्वविशि | स्वंविशि |
| ९३ | १९ | तै | तै |
| ९४ | २० | नाम्ना | नान्मा |
| ९४ | २२ | तच्छन्दो | तच्छब्दो |
| ९५ | ८ | सांसारीक | सांसारिक |
| ९६ | ९ | सज्ञान | सज्ज्ञान |
| ९६ | ११ | विमला | विमल |
| ९६ | १४ | व्वधात् | व्यधात् |
| ९६ | १५ | स्वतो | स्वते |

**द्वितीयपरिशिष्टे**

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९७ | ६ | व्युत्पत्यर्थ | व्युत्पत्त्यर्थं |
| १०० | ६ | शुद्वा | शुद्धा |
| १०० | ९ | घातक | घातक |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०५ | ८ | | |
| १०६ | १४ | | |
| १०६ | १५ | | |
| १०६ | १६ | रुप | रूप |
| १०६ | १७ | | |
| १०६ | १९ | | |
| १०७ | २ | | |
| ,, | ,, | | |
| १०७ | १७ | व्याप्यो | व्याप्यो |
| १०८ | ६ | सो | स |
| १०८ | १६ | ह्रदो | हृदो |

पुरः प्रदिर्शितपृष्ठे दर्शितपङ्क्त्यामनुस्वारस्थाने 'म्' कर्तव्यः।

४-१८, ५-२, ६-६, २६-१९, ४४-११
७१-११, ८०-१३, ८०-२३, ८२-१२
८२-१४. ८२-१६, ८३-१०, ८३-११
८४-१९, ८५-१३, ८८-९, ८९-५
८९-७, ८९-११, ९०-५, ९१-१२
९२-१८. १०१-६

१०८ पृष्ठे २० पङ्क्तौ

बाधेन हेत्वाभासेन परामर्शप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धाद् स्वरूपासिद्ध्या साक्षादनुमितिप्रतिबन्धान्नानुमित्या रससिद्धि। ।

इत्येतत्स्थाने—

बाधेन हेत्वाभासेन साक्षादनुमितिप्रतिबन्धात्स्वरूपासिद्ध्या परामर्शप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धान्नानुमित्या रससिद्धि। ।

॥ इति शोध्यम् ॥

॥ શ્રી ગૌતમસ્વામિને નમ ॥

## —: શ્રી જૈન સાહિત્યવર્ધક સભા :—

**સ્થાપના**—સંવત ૧૯૯૫ ના ભાદરવા શુદિ ૨, (બીજને) ને શુક્રવારે આચાર્ય મહારાજ શ્રીમદ્ વિજયામૃતસૂરીશ્વરજી મહારાજશ્રી-ના ઉપદેશથી આ સભા શેઠ નેમુભાઇની વાડીના ઉપાશ્રયમાં સ્થાપવામા આવી છે

**ઉદ્દેશ:**—પૂર્વાચાર્ય કૃત તેમજ નવીન ન્યાય વ્યાકરણ સાહિત્ય વિગેરે વિષયક ગ્રન્થો તેમજ તેના પર વ્યાખ્યાઓનુ પ્રકાશન કરવું તેમજ જ્ઞાન વૃદ્ધિના સાધનોમા યથાશક્તિ ઉદ્યમવત રહેવુ.

"શ્રી વૃદ્ધિ નેમિ અમૃત ગ્રન્થમાલા"

**કાર્ય**—આચાર્ય મહારાજ શ્રીમદ્ વિજયામૃતસૂરીશ્વરજી મહારાજ તેમજ તેમના શિષ્યોએ વિરચિત ન્યાય સાહિત્ય વિગેરે વિષયના ગ્રન્થો છપાવી પ્રગટ કરવા

**ફંડ વ્યવસ્થા**—આ ગ્રન્થમાલાના ફંડ માટે નીચે પ્રમાણે વ્યવસ્થા કરવામા આવી છે

૧૦૧ અર્પનાર ગૃહસ્થ આ ગ્રન્થમાલાના 'સરક્ષક' ગણાશે
૫૧ ,, ,, ,, ,, સહાયક ,,
૨૫ ,, ,, ,, ,, સભ્ય ,,

તેમને આ ગ્રન્થમાલા તરફથી બહાર પડતા ગ્રન્થોની અનુક્રમે ચાર (૪) બે (૨) અને એક (૧) નકલ ભેટ આપવામા આવશે

રૂા ૧૧) ઓછામા ઓછી રકમ તરીકે આ ગ્રન્થમાલામા સ્વીકારવામા આવશે

'સરક્ષક' ના નામો.

૫૦૧ શ્રી હરજી જૈન જ્ઞાનશાલાના જ્ઞાન ખાતામાથી (સસ-સન્ધાન મહાકાવ્ય માટે)
૧૦૧ શાહ શીવચદ વજેચંદ
૧૦૧ પાર્શ્વનાથ ભગવાનની પેઢી નવસારી
૨૦૧ શાહ મીઠાભાઈ કલ્યાણચદની પેઢી કપડવંજ
૧૦૧ શાહ કલ્યાણચદ વજેચદ
૧૦૧ શાહ વજેચદ ખુમાજી
૧૦૧ નગરશેઠ પોપટલાલ ધારસીભાઇ જામનગર
૧૦૧ દોશી અમૃતલાલ કાલીદાસ, જામનગર

## 'સહાયક' ના નામો.

૭૫ વડાચૌટાના શ્રી સંઘ તરફથી
૫૧ શાહ છગનલાલ ધનજીભાઇ
૫૧ નગીનચંદ કપુરચંદ
૫૧ ચુનીલાલ ગુલાબચંદ દાળીયા
૫૧ શાહ કીકાભાઇ સકળચંદ સરૈયા
૫૦ ,, નગીનચંદ કપુરચંદ જરીવાળા
૫૧ ,, વીરચંદ હરજીવનદાસની કું
૫૧ ,, મગનલાલ દેવચંદ જરીવાલા
૫૧ ઝવેરી ગલાલચંદ હ સરાજ
૫૧ શાહ ઘેલાભાઇ રતનચંદ ઝવે:
૫૧ શાહ ચંદુલાલ છગનલાલ
૫૧ શાહ માણેકચંદ ઝવેરચંદ
૫૧ શાહ સાકરચંદ ખુશાલચંદ
૫૧ મુલચંદ બુલાખીદાસ ખંભાત
૫૧ હરખચંદ તાપીદાસ લાકડાવાલ
૫૧ શાહ દલીચંદ વીરચંદ શ્રોફ
૫૧ શાહ કલ્યાણચંદ દેવચંદ
૫૦ શાહ જેસંગલાલ સાકરચંદ સમૈ

## 'સભ્ય' ના નામો

૨૫ શાહ નવલચંદ ખીમચંદ ઝવેરી
૨૫ શાહ ભાઇચંદ લાલભાઇ
૨૫ શાહ મંગુભાઇ બાલુભાઇ
૨૫ શાહ દીપચંદ ધરમચંદ
હા તેમના પુત્રી કીકીબેન
૨૫ મંગળભાઇ મુલચંદ અદાલતવાળા
૨૫ શાહ ચીમનલાલ નગીનદાસ
૨૫ શાહ નવલચંદ ઘેલાભાઇ
૨૫ શાહ ઘેલાભાઇ દીપચંદ
૨૫ શાહ છગનભાઇ કીકાભાઈ
૨૫ શાહ ચુનીલાલ વમળચંદ
૨૫ લલ્લુભાઇ ગુલાબચંદ
૨૫ શાહ કાલીદાસ રતનચંદ
૨૫ શાહ પ્રસન્નસુખ સુરચંદ બદામી
૨૫ શાહ કેશરીચંદ ચુનીલાલ ,,
૨૫ શાહ અમીચંદ ગોવીંદજી
૨૫ શાહ વીરચંદ ખુમચંદ-
ફકીરચંદ કપુરચંદ
૨૫ શાહ બાલાભાઇ મગનલાલ
૨૫ શાહ વીનોદચંદ મોહનલાલ
૨૫ શાહ કલ્યાણચંદ દેવચંદ
હા તેમના પુત્રી બેન નેમકોર
૨૫ શાહ નાનુભાઇ દેવચંદ
૨૫ શાહ અમીચંદ નવલચંદ
૨૫ શાહ દલસુખભાઇ જેઠાભાઇ
૨૫ શાહ ફુલચંદ તલકચંદ
૨૫ શાહ નેમચંદ હીરાચંદ
૨૫ શાહ ઘેલાભાઇ અમીચંદ
૨૫ શાહ રંગીલદાસ લાલભાઈ
૨૫ શાહ ઘેલાભાઇ રાયચંદ
૨૫ શાહ ખીમચંદ લલ્લુભાઈ
૨૫ શાહ સવાયચંદ મોતીચંદ
૨૫ શાહ માણેકલાલ ડાહ્યાભાઈ
૨૫ શાહ કેશવલાલ કરસનદાસ
૨૫ શાહ વજેસેન નગીનદાસ
૨૫ શાહ કલ્યાણચંદ દેવચંદ
હા તેમના પુત્રી બેન મગ
૨૫ મોહનલાલ મગનલાલ બદામ
૨૫ ઠાકોરલાલ મગનલાલ
૨૫ લલ્લુભાઈ મેલાપચંદ
૨૫ બાબુભાઈ ફકીરચંદ
૨૫ રતીભાઇ છબીલદાસ